ततोऽनु बुद्ध्वा सकलं यथावद्
वृत्तं पुलस्त्यस्य सुतोऽनुतेपे ।
शुचा परीतोऽन्तिमकृत्यजातं
चकार रक्षोविधिना च तस्य ।। 26 ।।

(विद्युन्मालावृत्तम् )

अज्ञानेनान्याय्यं भूयो
लोकः कुर्यात् कृत्यं लोके ।
पश्चात्तापो येनास्य स्याद्
दुःखं चित्ते प्रादुःष्याच्च[1] ।। 27 ।।

1. प्रादुः ष्यात् = प्रकटीभवेत्। उपसर्गप्रादुर्भ्यामस्तिर्यच्परः (8.3.37) इत्यनेन षत्वम्।

तदनन्तर सारी बात जानकर रावण भी
अत्यन्त शोक से तत्क्षण था विक्षिप्त हुआ।
अन्ततः राक्षसी विधि से उस जिह्वासुर का
अन्त्येष्टि कर्म रावण ने था संपन्न किया ॥ २६ ॥

प्रायः अज्ञानता वश करते अन्याय लोग
फिर किये हुए कर्मों पर होता उन्हें शोक।
उनके चित्त में व्यापता क्लेश जब
आजीवन पश्चात्ताप उन्हें होता (प्रतिदिन)। २७ ॥

## षष्ठः सर्गः

### (सीताहरणोपाख्यानं जटायुवधोपाख्यानं च)

(इन्द्रवज्रावृत्तम् उपजातिवृत्तञ्च)

पत्यौ गते कर्मजितावनिं स्वां
स्वं जीवितं शून्यमिवाकलय्य ।
स्वकुम्भकाशाभिधपुत्रवक्त्र-
सन्दर्शनेच्छामिषतो न्यगादीत् ।।1।।

सहोदरं शूर्पणखा, दशास्य!
पत्युर्विहीना कथमत्र दीना ।
विनोदयेय स्वमिति प्रबुध्य
पुत्रं यियासामि निवस्तुमस्मिन् ।।2।।

पुत्रस्य सन्दर्शनमास्त नूनं
व्याजो मनस्यन्यदिवास्त तस्याः ।
सा पुंश्चली कामविकारजुष्टा
निजार्थमन्यं पतिमाचकाङ्क्ष ।।3।।

अन्वेष्टुकामा तमिमं प्रयाता
तदेव तावद्वनमास्त यत्र ।
रामः ससीतः सहलक्ष्मणश्च
कालं स्वकं यापयितुं प्रवृत्तः ।।4।।

# षष्ठ सर्ग

## (सीताहरणोपाख्यान तथा जटायुवधोपाख्यान)

अपने कर्मों से मृत पति की यह दशा देख
शूर्पणखा ने निज जीवन को शून्य समझ।
मुख कमल-दर्शन हित निज तनय
कुंभकाश के मिष से बोली वह इस प्रकार ॥ १ ॥

बन्धु दशानन ! किस विधि मैं
पति से विहीन दीन हीन यहां।
अपने मन को बहलाऊं, यह सोच बोली वह—
'पुत्र के पास रहने को मैं जा रही वहां ॥ २ ॥

सुत का दर्शन तो उसका मात्र बहाना था
मन में उसने कुछ और योजना दृढ़ कर ली।
काम विकारों से युक्ता पुंश्चली स्वयं
उसने अब अपने लिए अन्य पति की ही इच्छा की ॥ ३ ॥

उसके ही अन्वेषण हितार्थ निश्चय करके
शूर्पणखा पहुंची उस वन में ही शीघ्र जहां।
निज पत्नी सीता और लक्ष्मण के संग में
श्री राम व्यतीत कर रहे समय वहां ॥ ४ ॥

यदैव दृष्टौ रघुनन्दनोऽस्याः
पपात विद्धा ह्यभवत्तदैव ।
पञ्चेषुबाणैरसुराङ्गना सा
रामे न कस्याभिरमेत दृष्टिः ।।5।।

मायावशात्सा परिवर्त्य रूपं
विलोभनीयाकृतिमादधाना ।
सुराङ्गनानामपि लोभनीयं
रामं सकामाऽभिससार रामा ।।6।।

रामस्तु तस्यां रुचिमादधान्नो
सदैकपत्नीव्रतमादधानः ।
तच्चित्रमस्याः कृत आस्त नार्य-
शीलं विदू राक्षसनार्य आर्यम् ।।7।।

ततः समन्तादवलोकयन्ती
ददर्श सैकत्र विदेहपुत्रीम् ।
स्वस्मिंश्च तां सा विपरीतभावे
हेतुं विजज्ञे रघुनन्दनस्य ।।8।।

एषा नु यावद् ध्रियते न तावत्
रामानुकूल्यं मयि सम्भवि स्यात् ।
नैकत्र कोशेऽसियुगं सह स्या-
दित्येवमात्मन्यधि सम्प्रधार्य ।।9।।

सा राक्षसीरूपमभिप्रपन्ना
तां हन्तुमभ्यद्रवदात्तवेगा ।

जैसे ही रघुनन्दन उसको दिख पड़े वहां
वह कामदेव के बाणों से अनुविद्ध हुई ।
राम पर न उन बाणों का तनिक प्रभाव पड़ा
पर, असुरांगना पंच बाणों से विद्ध हुई ॥ ५ ॥

उसने सहसा मायावी रूप किया धारण
अत्यन्त विलोभनीय आकार बनाया था ।
वह रूप देवियों के हित भी था लोभनीय
राम को वासना का अभिसार बनाया था ॥ ६ ॥

राम तो एक पत्नी व्रतधारी रहे, अस्तु
उस शूर्पणखा में उनकी रुचि थी नहीं तनिक ।
यह देखि, राक्षसी को विस्मय भी हुआ क्योंकि
वह आर्य नारियों के न शील से थी परिचित ॥ ७ ॥

तदनन्तर चारों ओर देखती हुई सहज
उसने देखा विदेहपुत्री की ओर वहां ।
रघुनन्दन के विपरीत भाव का कारण भी
अपने प्रति, समझ गई सीता को तुरत यहां ॥ ८ ॥

सोचा उसने—जब तक यह नारी जीवित है
राम का मिलन संभव हो सकता कभी नहीं ।
दो-दो तलवारें एक म्यान में किसी भांति
चाहे जैसे हो, वे रह सकतीं कभी नहीं ॥ ९ ॥

राक्षसी रूप धारण करके वह शूर्पणखा
देवी सीता के वधार्थ दौड़ पड़ी सहसा ।

वात्यामिवाभ्यापतितां विलोक्य
तां लक्ष्मणः स्तम्भयितुं प्रवृत्तः ।।10।।

नारीत्यहिंस्येति स मन्यमान-
स्तां नो सुमित्रातनयोऽजिघांसत् ।
कर्णौ च नासां च चकर्त तस्याः
स केवलं तां निरभर्त्सयच्च ।।11।।

वैरूप्यमेवं प्रतिपादिता सो-
पैद् भ्रातरौ द्वौ खरदूषणाख्यौ ।
उपेत्य वृत्तं निजगाद चापि
तौ चापि योद्धुं समुपेयतुर्द्राक् ।।12।।

सलक्ष्मणं दाशरथिं वनान्ते
सैन्येन साकं महता निजेन ।
सहायहीनोऽपि सलक्ष्मणस्
तौ सम्प्रापयत्प्रेतपुरीं स वीरः ।।13।।

ततो ययौ शूर्पणखाऽतिखिन्ना
भ्रात्रन्तरं रावणनामधेयम् ।
तं चाह केनापि विरूपिताऽस्मि
तपस्विवेषेण वनान्तरेऽहम् ।।14।।

सीतेति नाम्न्यस्ति तदीयभार्या
रसायनं नेत्रयुगस्य लोके ।
धात्रा प्रयत्नेन कृता पृथिव्याम्
'एकत्र सौन्दर्यदिदृक्षयेव' ।।15।।

उसको प्रभंजन के समान दौड़ते देख
तत्क्षण लक्ष्मण ने रोक लिया सहसा ॥ १० ॥

यह नारी है, इसलिए, न वध के योग्य कभी
यह सोच लक्ष्मण ने वध उसका नहीं किया।
उसकी नासिका और कानों को दिया कतर
केवल उसका इस भांति यही अपमान किया ॥ ११ ॥

हो कुरूपिणी शूर्पणखा तत्काल स्वयं
जा पहुंची खर-दूषण नामक बन्धु के पास।
सारी घटना का वर्णन उन्हें बताया जब
वे दोनों भी संग्राम हेतु चल पड़े साथ ॥ १२ ॥

जंगल में राम और लक्ष्मण से रण हित
शस्त्रास्त्र-सैन्य-दल लेकर दोनों आ पहुंचे।
असहाय राम लक्ष्मण द्वारा वध किये गये
वे मृत्यु प्राप्त कर रामपुर दोनों जा पहुंचे ॥ १३ ॥

तदनन्तर अतिखिन्ना शूर्पणखा गई तुरत
लंका में अपने भ्राता रावण के समीप।
उससे बोली—हे बन्धु ! की गयी मैं कुरूप
वन मध्य किसी संन्यासी द्वारा ही सटीक ॥ १४ ॥

उसकी है एक सुन्दरी पत्नी सीता, जो
त्रिभुवन में दिखती नेत्र-रसायन के स्वरूप।
वह ब्रह्मा के प्रयत्न द्वारा रचिता भू पर
लगता है ज्यों एकत्र हुआ लावण्य-रूप ॥ १५ ॥

इमां तवार्थं समुपानयन्त्या-
मुपायनं लक्ष्मण आपतन्माम् ।
कृत्वा विरूपामथ मां स मत्तो
मत्तोऽच्छिनत्तां जनकस्य पुत्रीम् ।। 16 ।।

स त्वं प्रयाहि त्वरयोपपन्नो
हरस्व चैनां कमनीयकान्तिम् ।
ममापमानं प्रतिशोध्य चैव
तद्रामरामारमणं विधेहि ।। 17 ।।

श्रुत्वा स सौन्दर्यकथाममुष्याः
स्वसुर्मुखात् कामशरानुविद्धः ।
सीतां निजाङ्कानुगतां विधातु-
मुपायसञ्चिन्तनतत्परोऽभूत् ।। 18 ।।

आहूय मारीचमुवाच कञ्चित्
स राक्षसं राक्षसजातिमुख्यः ।
मारीच हे! हेममृगो भव त्वं
प्रयाहि रामस्य कुटीरकं च ।। 19 ।।

मायाविनामग्रसरः स एवं
मारीचनामा विदधेऽसुराग्र्यः ।
संकूर्दमानः प्रकटीबभूव
कुटीरकाग्रे च रघूद्वहस्य ।। 20 ।।

असम्भवं हेममृगस्य जन्म
तथाऽपि सीता लुलुभे मृगाय ।

उसको लेकर जब चली तुम्हारे हेतु बन्धु !
उस उग्र लक्ष्मण ने मुझ पर आक्रमण किया ।
मुझको कुरूप कर तदनन्तर मुझसे उसने
उस जनकराज की पुत्री को भी छीन लिया ॥ १६ ॥

इसलिए, इसी क्षण जाओ तुम उस जंगल में
कमनीय कान्ति वाली सीता का हरण करो ।
प्रतिशोध यही है मेरे उस अपमान हेतु
फिर रामभद्र की आर्या संग आनन्द करो ॥ १७ ॥

रावण सीता की सुन्दरता का वर्णन सुन
अपनी भगिनी के मुख से, कामशरानुविद्ध ।
उसको अपने अंक लगाने को तत्पर
सोचा उपाय, जिससे हो जाये कार्यसिद्ध ॥ १८ ॥

बुलवा कर मारीच नाम के राक्षस को
उस समय राक्षस कुल का था जो प्रमुख दैत्य ।
बोला उससे—मारीच ! बनो तुम कंचन मृग
अब इसी समय जाओ तुम राम कुटीर मध्य ॥ १९ ॥

मायावी असुरों में वह सबसे आगे था
मारीच नाम के राक्षस ने था वही किया ।
रघुनन्दन की कुटिया के आगे मृग रूपी
कूदता हुआ वह राक्षस सहसा प्रकट हुआ ॥ २० ॥

सोने के मृग का जन्म असंभव है तथापि
उस मृग के लिए जानकी ललचा उठीं तुरत ।

प्रायः समासन्नपराभवाणां
धियो विपर्यस्ततरा भवन्ति ।।21।।

सा प्राह भर्त्तारममुं मदर्थं
विचित्ररूपं मृगमानयस्व ।
न चानुमेने सहसा च तत्स
मायाऽसुराणामिति बोधयंस्ताम् ।।22।।

भूयोऽपि तस्यां हठमाश्रयन्त्यां
तदीयवाञ्छापरिपूरणाय ।
मृगं ग्रहीतुं स जगाम धीरो
न च ग्रहीतुं तमभूत्स शक्तः ।।23।।

वनान्तरं दूरतरं गते स
तस्मिञ्शरं प्राणहरं मुमोच ।
येन प्रविद्धो मृग आर्त्तनादं
हा जानकीति प्रविनद्य नष्टः ।।24।।

श्रुत्वा तु तप्तायससन्निभं तं
सीता समुद्वेगमपारमाप ।
सम्प्रेषयामास च लक्ष्मणं सा
शीघ्रं तदीयाग्रजरक्षणाय ।।25।।

अत्रान्तरे तत्र समापतद् द्राक्
लङ्केश्वरः सन्धृतसाधुवेषः ।
सहायहीनां च जहार सीतां
लङ्कापुरीं तामनयच्च भीताम् ।।26।।

प्राय: आते ही विपत्काल, जो बुद्धिमान
हो जाती उनकी बुद्धि बड़ी ही सहज लुप्त ॥ २१ ॥

सीता बोलीं पति से—स्वामिन् ! यह कंचनमृग,
ले आओ मेरे लिए उसे जो है दिव्य रूप ।
अनुमोदन सहसा राम न कर, यों समझाए—
हे देवि ! यही असुरों का मायावी स्वरूप ॥ २२ ॥

पर बार-बार सीता के हठ के कारण ही
उनकी इच्छा पूरी करने के हेतु चले वे
धीर वीर वे गये उस मृग को सहज पकड़ने हित
पर उसे पकड़ने में समर्थ हो सके न वे ॥ २३ ॥

उसके पीछे-पीछे वे गये दूर तक विपिन मध्य
उस पर प्राणान्तक वाण उन्होंने छोड़ दिया ।
जिससे प्रविद्ध हो मृग करता आर्तनाद
चिल्लाया—'हा जानकी' ! और फिर नष्ट हुआ ॥ २४ ॥

वह आर्तनाद जो तप्त-लौह के सदृश रहा
सुन सीता असीमभय से कांप गईं ।
इसलिए, तुरत लक्ष्मण को भेजा देवी ने
भैया की रक्षा हित श्रीराम तईं ॥ २५ ॥

फिर, इसी बीच लंकेश्वर धर के साधुवेष
शीघ्रातिशीघ्र कुटिया-समीप आ गया वहां ।
असहाय पड़ी सीता का हरण किया उसने
भीता सीता को लाया लंकापुरी जहां ॥ २६ ॥

मध्येपथं तच्छ्वशुरस्य मित्रं
जटायुनामा किल गृध्रराजः ।
जरातुरः सन्नपि तं रुरोध
सर्वं तदाश्चर्यकरं बभूव ।। 27 ।।

तीक्ष्णेन तुण्डेन स पक्षिराजो
दशाननं तं बलवत्तुतोद ।
असिप्रहारा इव तत्प्रहारा-
स्तस्मायसह्याः सुतरामभूवन् ।। 28 ।।

यत्नं श्रयित्वाऽपि दशाननस्तं
दिशां विजेता न शशाक हन्तुम् ।
विकत्थनस्तं स तदा बभाषे
स्वं वीर्यमाख्यापयितुं जटायुः ।। 29 ।।

तवासिना वा विशिखेन वाऽहं
शस्त्रेण वाऽन्येन कथञ्चनापि ।
हन्तुं न लोकत्रितयेऽपि शक्य-
स्तथाविधा मे खलु शक्तिरस्ति ।। 30 ।।

माहेश्वरं केवलमङ्गुलीयं
सीताङ्गुलिप्रत्ययमादधानम् ।
शक्नोति मां हन्तुमतो वृथा ते
शस्त्राणि चास्त्राणि च मूढबुद्धे! ।। 31 ।

श्रुत्वादसीयं वचनं स्मयोक्तं
क्षणात्प्रसुप्तोत्थितवद्दशास्यः ।

मार्ग-मध्य था खड़ा जटायू गिद्धराज
सीता के श्वसुर नृपति दशरथ का मित्र रहा।
वह मार्ग रोककर खड़ा हुआ अचरज महान्
यद्यपि इस समय जटायू अतिशय वृद्ध रहा ॥ २७ ॥

निज तीक्ष्ण-चोंच से गृद्धाधिपति जटायू ने
जब लंकेश्वर पर अतिबल से आघात किया।
खड्ग-सदृश कठोर वह भीषण प्रहार
जो था असह्य-आघात उस समय विकट रहा ॥ २८ ॥

करके प्रयत्न भी रावण, जो दिग्विजयी था,
उस गृध्रराज का वध कर पाया नहीं वहाँ।
तब लंकेश्वर ने स्वयं प्रशंसा की उसकी
बोला 'ऐसा अपार बल उसे मिला कहाँ' ॥ २९ ॥

वह बोला—रावण ! इस असि से, तीव्र शस्त्र से भी
अथवा अन्यान्य खड्ग से कुछ हो सके नहीं।
मुझको है, प्राप्त अपरिमित बल ऐसा रावण !
त्रिभुवन में कोई शक्ति मुझे वध सके नहीं ॥ ३० ॥

महेश्वर की दी हुई अंगूठी ही केवल
जिसको सीता ने अंगुली में है पहन रखा।
वध उससे ही हो सकता मेरा मूढ बुद्धि !
अन्यान्य शस्त्र-अस्त्रादि यहां हैं सर्वथा वृथा ॥ ३१ ॥

तब गृध्रराज के वचन श्रवण कर रावण भी
क्षण भर जैसे सोया हो, उठकर बैठ गया।

सीताङ्गुलेर्द्रागपकृष्य धूर्त-
स्तदङ्गुलीयं प्रजहार तस्मिन् ।। 32 ।।

तदङ्गुलीयप्रहृतः स पक्षी
विदेहजास्त्रैः सममेव हन्त ।
प्राणान् प्रियान् स्वान् विमुमोच वीरो
लोकान्स्वपुण्यौघजितान् ययौ च ।। 33 ।।

अत्रान्तरे राघववीरमुख्यौ
कुटीरकं स्वं प्रति संनिवृत्तौ ।
सीतामदृष्ट्वा व्यथितान्तरङ्गौ
तन्मार्गणे स्वां मतिमादधाते ।। 34 ।।

आहिण्डमानौ विपिनान्तरेषु
तौ दृष्टवन्तौ किल गृध्रराजम् ।
हतेऽपि यस्मिन् न समत्यजद्यं
विशेषकार्यान्तरितो यदात्मा ।। 35 ।।

रामं दशास्येन शठेन तावद्
विदेहजाया हरणं स ऊचे ।
सीताङ्गुलीयं च समर्प्य तस्मै
कृती विशश्राम सुखं स आत्मा ।। 36 ।।

अन्त्येष्टिकृत्यं कृतिनो जटायो-
स्तस्यात्मनीनस्य विधातुमिच्छुः ।
मुमोच रामः शरमेकमारा-
च्चितां भृशं यो ज्वलयांबभूव ।। 37 ।।

खींच कर अंगूठी सीता की अंगुली से फिर
उसने तत्क्षण उस पर था घोर प्रहार किया ॥ ३२ ॥

उस अंगुलीय का जैसे ही आघात लगा
गिर पड़ा जटायू सीता के अश्रु के साथ।
तत्काल त्याग निज प्राणों को महावीर
अपने अर्जित पुण्यों से पहुंचा स्वर्गधाम ॥ ३३ ॥

इस बीच वीर राघव लक्ष्मण के साथ-साथ
अपनी पर्णकुटि में यथाशीघ्र वापस आये।
कुटिया में सीता को न देख, वे हुए व्यथित
उनके अन्वेषण हेतु तुरत ही उठ धाये ॥ ३४ ॥

खोजते हुए वे पहुंचे एक गहन वन में
उन दोनों ने देखा कि गृध्र था पड़ा वहां।
यद्यपि वह था मर चुका उस समय गृध्रराज
फिर भी उसकी अन्तरात्मा थी पड़ी वहां ॥ ३५ ॥

वह बोला रघुनन्दन से—नाथ ! दशानन ने
मिथिलेशकुमारी का इस वन में हरण किया।
पश्चात्-समर्पित कर सीता की अंगुलीय
सुख से उस आत्मा ने तत्क्षण विश्राम किया ॥ ३६ ॥

अन्त्येष्टि क्रिया उसकी करने के इच्छुक वे
श्रीरामभद्र ने उसको अपना प्रिय समझा।
तत्काल चलाया बाण स्वयं निज तरकस से
बन गयी चिता, तब अग्नि ज्वाल वहां उठी सहसा ॥ ३७ ॥

शरेण चान्येन स गृध्रदेह-
मारोपयामास शनैश्चितायाम् ।
दग्धे च देहे स शरेण ताव-
दन्येन वह्निं शमयाम्बभूव ।।38।।

एवं विनिष्पाद्य विचित्ररूप-
मन्त्येष्टिकृत्यं विहगोत्तमस्य ।
दशास्यसम्मार्गणसम्प्रयुक्तः
स दक्षिणाशां प्रति सम्प्रतस्थे ।।39।।

(पुष्पिताग्रावृत्तम्)

कथमपि जनकात्मजाविहीनः
समयमयापयदात्मनि प्रलीनः ।
अविरतगमनाच्छ्रमं प्रपन्नो
दशरथवंशधरो भृशं विपन्नः ।।40।।

दूसरा बाण फिर मारा जिससे गृध्रदेह
धीरे-धीरे उस चिता-मध्य थी बैठ गई।
जब देह हो गयी भस्म तभी दूसरा बाण
चलते ही सहज चिताग्नि शीघ्र ही शान्त हुई ॥ ३८ ॥

इस भांति विचित्र रूप से थी सम्पन्न हुई
उस विहगराज की वह अन्त्येष्टि क्रिया जैसे।
रघुनन्दन तुरत दशानन को खोजते हुए
चल पड़े उस समय दक्षिण दिशा हेतु वैसे ॥ ३९ ॥

सीता वियोग में दुःखी राम
थे समय बिताते आत्मलीन।
चलते-चलते थक गये अधिक
दशरथ सुत वे अति दीन-हीन ॥ ४० ॥

# सप्तमः सर्गः

## (हनुमत्सम्पर्कोपाख्यानम् )

(इन्द्रवज्रावृत्तम् उपजातिवृत्तञ्च)

मध्येपथं वृक्षतले क्वचित् स
श्रमापनोदाय निषण्ण आसीत् ।
अवीजयत्तं पवनोऽतिमन्द-
स्तत्र स्थितं सेवकवच्छ्रमेण ।।1।।

वातेन मन्देन स वीज्यमानो
जगाम निद्रां व्यथितो हृदाऽपि ।
निद्रा मता शान्तिकरी जगत्यां
कष्टश्रितानामपि देहभाजाम् ।।2।।

अत्रान्तरे दीर्घवपुः कुतश्चित्
समापतत्तत्र कपिप्रवीरः ।
अदृष्टपूर्वौ युवकौ वनान्ते
स विस्मितोऽभूत् सुतरां च दृष्ट्वा ।।3।।

सौमित्रिरत्रावसरे बभूव
स्थितोऽग्रजं स्वं समयाऽसिहस्तः ।
नैवोर्ध्वदृष्टिः स बभूव यस्मात्
नालोकयामास कपिं स तस्मात् ।।4।।

# सप्तम सर्ग

**(हनुमत्सम्पर्कोपाख्यान)**

अपने परिभ्रमण के क्रम में तरुतले एक
विश्राम हेतु श्रीरामभद्र बैठे आकर ।
तब तक अतिमन्द पवन झलता पंखा श्रम से
दिखता सेवक की भांति मनोज्ञ वहां आकर ॥ १ ॥

शीतल-सुमन्द वायु से झले पंखे से वे
थे व्यथित-हृदय फिर भी निद्रा में हुए मग्न ।
संसार मध्य निद्रा कहलाती शान्तिकरी
जो भी शरीरधारी रहते हैं कष्ट लग्न ॥ २ ॥

इस बीच कहीं से दीर्घ देह अत्यन्त बली
कोई वानर वीरवर आ गया वहां ।
उस वन में दो अदृष्टपूर्व युवकों को लख
उसे हुआ उस समय महान् आश्चर्य वहां ॥ ३ ॥

सुमित्रानन्दन लक्ष्मण भी इस अवसर पर
अग्रज की सेवा हेतु खड़े थे असि लेकर ।
कपि को न देख पाये वे, उस काल वहाँ
क्योंकि उस क्षण दृष्टि न थी उनकी ऊपर ॥ ४ ॥

तद्दृष्टिमात्मन्यपकर्ष्टुमेष
शाखामृगोऽधूनयदत्र शाखाम् ।
वृक्षस्य यस्याध उपास्त निद्रां
रामो जगन्नेत्रयुगाभिरामः ।।5।।

तं धूनयन्तं समवेक्ष्य शाखा-
मतर्जयल्लक्ष्मण आत्तरोषः ।
नासौ च तस्माद्विरतो बभूव
शाखां दुधावैव मुहुर्मुहुश्च ।।6।।

दण्ड्योऽयमित्यात्तमनाः कुमारः
श्रीलक्ष्मणः कार्मुकमाददे स्वम् ।
शरं तथोग्रं च निहन्तुकामः
शाखामृगं चापलसम्प्रयुक्तम् ।।7।।

उभावपि द्राक् प्रहसन्निवाप-
निन्ये करात्तस्य सुविस्मितस्य ।
आरूढवांश्चैव पुनः स शाखां
शाखामृगस्तां धवितुं प्रवृत्तः ।।8।।

एवं गते लक्ष्मण आत्तलज्जो
निजाग्रजं जागरयाम्बभूव ।
निवेदयामास च सर्ववृत्तं
खर्वीकृतस्वाखिलवीर्यगर्वः ।।9।।

श्रुत्वादसीयं वचनं विचित्रं
रामः क्षणाद् ऊर्ध्वमवालुलोके ।

आकर्षित करने हेतु ध्यान उन दोनों का
कपिवर भी रहा हिलाता शाखा सहज वहां।
वे जगन्नेत्र युग के अभिराम राम भी तो
जिस तरु के नीचे रहे नींद में मग्न जहाँ ॥ ५ ॥

इस भांति डाल को अधिक हिलाते देख उसे
क्रोधातुर हो लक्ष्मण ने धमकाया कई बार।
पर, वह कपि उससे विरत न हो पाया किञ्चित्
फिर रहा हिलाता डाली को ही लगातार ॥ ६ ॥

"यह दण्ड-योग्य है" यही सोच करके कुमार
लक्ष्मण ने अपना धनुष-बाण था उठा लिया।
अत्यन्त तीक्ष्ण शर से उस शाखामृग का ही
जो चपल अधिक था, वध करने को ठान लिया ॥ ७ ॥

हंसते-हंसते उस कपि ने उनका धनुष्र-बाण
छीनकर हाथ से उनको विस्मित बना दिया।
तदनन्तर चढ़ कर डाली पर वह बैठ गया
शाखा को पुनः हिलाना भी प्रारंभ किया ॥ ८ ॥

यह देख लक्ष्मण अतिशय लज्जित हुए तथा
निज ज्येष्ठ बन्धु को सहसा तुरत जगाया था।
जिस भांति हुआ निज गर्व वीर्यबल नष्ट वहां
सारा वृत्तान्त विनय के साथ बताया था ॥ ९ ॥

लक्ष्मण के द्वारा सुनकर अचरज भरे वचन
श्रीरामभद्र ने उसी समय देखा ऊपर।

शाखामृगं चापि ददर्श तत्रा-
भिजज्ञिवांस्तस्य च लक्षणानि ।। 10 ।।

ज्ञातानि विज्ञाय निजानि शाखा-
मृगः समस्तानि तु लक्षणानि ।
विवेद वृक्षस्य तले निषण्णं
ज्ञनं स नारायणमेव साक्षात् ।। 11 ।।

ततः स वृक्षादवतीर्य सद्य-
स्तत्पादपद्मश्रयणाभिकाङ्क्षः ।
विनीतवत्तस्य पुरः स्थितोऽभूत्
तं चाब्रवीत्स्वं च समर्प्य तस्मै ।। 12 ।।

अद्यप्रभृत्यस्मि तवाङ्ग दासो
नाम्ना हनूमान् पवनस्य पुत्रः ।
त्वद्दर्शनाप्यायितमानसं मां
त्वमाज्ञया तुष्टतमं विधेहि ।। 13 ।।

वाचं तदीयाममृतायमानां
निपीय तं दाशरथिर्बभाषे ।
भार्या हृता मे दशकण्ठनाम्ना-
ऽसुराऽधमेनात्र विधेहि साह्यम् ।। 14 ।।

ओमित्युवाचाथ कपिप्रवीरः
सुग्रीवपार्श्वे प्रणिनाय तं च ।
मित्रत्वमापद्यत येन तस्य
समं निवासेन वनेऽत्र पूर्वम् ।। 15 ।।

पहचान गये उसके लक्षण जो परम दिव्य
जैसे ही देखा कपि को बैठा शाखा पर ॥ १० ॥

शाखामृग ने भी अपने सकल लक्षणों को
जान उन्हें मन ही मन सब कुछ समझ लिया।
इस तरु के नीचे सोया है जो जन साक्षात्
वह निःसंशय नारायण हैं, यह जान लिया ॥ ११ ॥

तत्काल उतरकर उसी समय उस तरु से वह
जागी इच्छा उन चरण कमल के आश्रय की।
इसलिए, विनीत की भांति सामने खड़ा हुआ
हो गया समर्पित उनसे सहज विनय भी की ॥ १२ ॥

हे नाथ ! आज से हुआ तुम्हारा अंगदास
हनुमान् नाम है मेरा, मैं हूं पवन-पुत्र।
दर्शन पाकर कृतकृत्य हुआ मेरा मानस
आपकी आज्ञा पालन ही है मेरा मुख्य सूत्र ॥ १३ ॥

उसके विनीत अमृत से भरे वचन को वे
रघुनन्दन पीकर उससे बोले इस प्रकार।
मेरी पत्नी का रावण ने अपहरण किया
तुम बनो सहायक इसमें जैसे, जिस प्रकार ॥ १४ ॥

तदनन्तर 'ऐसा ही होगा' कपिवर बोला—
सुग्रीव समीप उन्हें वह ले कर गया वहां।
वन में पहले से ही निवास के कारण ही
उन दोनों में मित्रता हो गई सहज वहां ॥ १५ ॥

सम्बन्ध आभाषणपूर्वकोऽभूद्
रामस्य सुग्रीवकपेश्च तत्र ।
मैत्री च सम्बन्धवशात्प्रजाता
प्रगाढतां या क्रमशः प्रयाता ।। 16 ।।

मैत्र्या तया दाशरथिर्जघान
सुग्रीवशत्रुं किल वालिसञ्ज्ञम् ।
सीतापुनःप्राप्तिकृते च साह्यं
सुग्रीवराजः प्रतिजज्ञ एनम् ।। 17 ।।

वालीतिनामास्य बभूव शक्ति-
शालीति लोकत्रितये प्रसिद्धः ।
भ्राताऽग्रजो वानरयूथमुख्यो
येनास्य जातः प्रबलो विरोधः ।। 18 ।।

(स्वागतावृत्तम्)

पूर्ववृत्तमभवत्खलु तावत्
कारणं प्रबलमत्र विरोधे ।
तादृगेव घटतेऽत्र जगत्यां
नैव चिन्तयति कोऽपि तु यादृक् ।। 19 ।।

जब हुई परस्पर बातचीत-संबंध हुआ
भगवान् राम में और कपि सुग्रीव में वहां।
संबंध-विशेषों से मैत्री बढ़ गई तथा
जिसमें क्रमशः प्रागढ़ता आती गयी वहाँ ॥ १६ ॥

उस मैत्री के कारण श्री रामभद्र ने भी
सुग्रीव-शत्रु वाली की हत्या की।
सीता को पुनः प्राप्त करने के लिए तभी
सुग्रीव राज ने उस क्षण सुदृढ़ प्रतिज्ञा की ॥ १७ ॥

वाली भी रहा बलवान् शक्तिशाली अतीव
वह त्रिभुवन में उस समय अधिक विख्यात हुआ।
वह ज्येष्ठ बन्धु वानर समूह का था प्रधान
सुग्रीवराज का उससे प्रबल विरोध हुआ ॥ १८ ॥

होती अतीत की घटनाएं जो, वही सहज
कारण भी प्रबल विरोध का बन रही यहां।
घटनाएं घटती रहीं जगत् में उसी भांति
पर, इसे न कोई सोच रहा इस भांति यहां ॥ १९ ॥

# अष्टमः सर्गः

## (दरभ्यु (थोरप्यु)पाख्यानं
## वालिवधोपाख्यानं
## लङ्कादहनोपाख्यानं च)

(इन्द्रवज्रावृत्तम् उपजातिवृत्तञ्च)

आसीत्पुरा राक्षसजातिजातः
कैलासवासी किल नन्दकालः ।
द्वारेषु कैलासगिरेः स आसी-
देकस्य रक्षार्थमभिप्रयुक्तः ।।1।।

स एकदोद्यानगतां शिवस्य
दृष्ट्वोपपत्नीं सुतरां विमुग्धः ।[1]
विधातुमात्माभिमुखीमकस्मात्
पुष्पेण तां सम्प्रजहार कामी ।।2।।

तदीयधाष्ट्र्येन विकम्पिता सा
प्रभुं प्रपेदे तरसेश्वरं द्राक् ।
स चापि शापं विससर्ज तस्मै
न वृत्तभङ्गोऽस्य बभूव सह्यः ।।3।।

स तेन जज्ञे दरभाभिधानो
विशालरूपो महिषः क्षणेन ।

1. प्रभोः शिवस्य नानोपपत्न्य आसन्निति थाइरामायणम्। तास्वन्यतमां विलोक्य नन्दकालो मोहमापत्।

# अष्टम सर्ग

(दरभ्युपाख्यान, वालिवधोपाख्यान तथा लंकादहनापाख्यान)

प्राचीन काल में किसी समय राक्षसकुल में
था नन्दकाल दानव जिसका था वास कैलास ।
कैलास शिखर के द्वारों में ही एक द्वार
पर वह नियुक्त था भली-भाँति रक्षा हितार्थ ॥ १ ॥

वह, एक बार उद्यान मध्य शिव-उपपत्नी
को देख शीघ्र ही उन पर सहज विमुग्ध हुआ ।
फिर उन्हें आत्माभिमुखी करने को उसने
पुष्पों द्वारा था आक्रमण तत्काल किया ॥ २ ॥

कम्पिता हुई देवी उसकी धृष्टता देख
शीघ्र ही गयीं वह महामहेश्वर के समीप ।
सुनते ही सारा वृत्त उसे दे दिया शाप
थी सह्य नहीं उन्हें वृत्त के भंग की एक लीक ॥ ३ ॥

शापित हो वह उत्पन्न हुआ क्षण भर में ही
जो दरभ नाम का महिष रूप था अति विशाल ।
अपने सुत का मुख-दर्शन करते ही उसका
शाप ही बनेगा उस दानव का अन्तकाल ॥ ४ ॥

तनूजवक्त्राम्बुजदर्शनान्तो
बभूव शापो दनुजस्य तस्य ।।4।।

हनिष्यतेऽसौ तनुजेन तेने-
त्येवं प्रभुस्तत्र विधिं वितेने ।
हेतोर्यतोऽसौ खलु जातमात्रान्
सुताननेकान् निजघान दैत्यः ।।5।।

सुदुःखितास्तेन समा[1] बभूवुः
समा महिष्यः सुतहिंसयाऽत्र ।
आगामिपुत्रस्य च रक्षणार्थ-
मिमा मनः स्वं द्रढयाम्बभूवुः ।।6।।

अथैकदा गर्भवती प्रजाता
तस्माद्दनूजान्महिषी यदैका ।
तद्दर्शनं सा परिहर्तुकामा
वनस्य कस्यापि गुहां विवेश ।।7।।

कालेन साऽसोष्ट सुतं दृढाङ्गं
तं चाह तत्तातनृशंसकृत्यम् ।
विसृज्य तत्रैव च तं कथञ्चिद्
दीना गुहातो बहिराजगाम ।।8।।

कालेन पुत्रो दरभीतिनामा
ऽज्ञातः पितुः काननमाससाद ।
स्मरन्स्वमातुर्वचनस्य चापि
नियोधनायाह्वयत स्वतातम् ।।9।।

1. वर्षाणीत्यर्थः। कालाध्वनोरत्यन्तसंयोग (2.3.5) इत्यनेन द्वितीया।

अपने ही सुत के द्वारा उसका होगा वध
यह सोच दरभ ने उसी प्रकार उपाय किया ।
इसलिए, पुत्रों के पैदा होते निःसंशय
उस दानव ने उन सबका वध तत्काल किया ॥ ५ ॥

सन्तप्त हो रही वर्षों से सारी महिषियाँ
दानव द्वारा निज पुत्रों की हिंसाएं निहार ।
आगामी सुत की रक्षा हेतु महिषियों ने
अपने मन में सहसा निश्चय कर लिया जोर ॥ ६ ॥

फिर एक बार महिषी कोई गर्भिणी हुई
जिसने दृढ़ निश्चय से था ऐसा काम किया ।
उस दानव के दर्शन से बचने के हितार्थ
वन मध्य कन्दरा में तत्काल प्रवेश किया ॥ ७ ॥

कुछ समय अनन्तर उसने सुत को दिया जन्म
पति के नृशंस कृत्यों को बतलाया उससे ।
आ गयी गुहा के बाहर दीना महिषी वह
छोड़कर वहीं किसी भाँति माँ सहज उसे ॥ ८ ॥

कालान्तर में दरभी नामक अज्ञात पुत्र
आ गया पिता के कानन में वह ज्यों ही ।
माँ के वचनों का करते हुए स्मरण तब
रण हेतु पिता को उसने ललकारा त्यों ही ॥ ९ ॥

नियोधने तं विनिहत्य चापि
　　स शूरमानीश्वरमाससाद ।
नियोधनायाह्वत तं च दर्पान्
　　मत्ताः प्रमत्ताः किमु वा न कुर्युः ।। 10 ।।

तमीश्वरो वालिनमाह गन्तुं
　　यतो वधोऽभूत्सुविनिश्चितोऽस्य ।
स वालिनं प्रेक्ष्य नियोधनाय
　　स्वशक्तिगर्वान्धितयाह्वत द्राक् ।। 11 ।।

आह्वानमस्यातितराममृष्य-
　　न्नमर्षणस्तेन बलान्न्ययुद्ध ।
वाली न तं चाप्यशकद्विजेतुं
　　न तं च स प्रार्थितशत्रुलुब्धः ।। 12 ।।

वाली ततस्तं महिषं जगाद
　　योद्धुं परेद्युर्गिरिकन्दरायाम् ।
ओमित्युवाचाथ च तं स वीर!
　　यथाभिलाषस्तव तत्तथाऽस्तु ।। 13 ।।

सुग्रीवसञ्ज्ञं समुवाच वाली
　　गुहामुखे स्थातुमथानुजं सः ।
द्रष्टुं प्रवाहं रुधिरस्य चापि
　　तेनानुमातुं विजयाजयौ च ।। 14 ।।

वीक्षेत रक्तं यदि कृष्णवर्णं
　　स मन्यतां यन्महिषो हतोऽस्ति ।

फिर द्वन्द्व-युद्ध में वधकर उसको शूरवीर
वह मानी शिवजी के समीप पहुंचा ऐसा।
था अहंकार उसको, ललकारा शिवजी को युद्ध हेतु
मदमत्त करे क्या नहीं करे यों ही सहसा ॥ १० ॥

शिव बोले उससे-'जाओ वाली के समीप
उसके ही हाथों क्योंकि तुम्हारा वध निश्चित।
वाली को देख चुनौती दी रण हेतु क्योंकि
निज शक्ति गर्व से अन्धा वह हो रहा अधिक ॥ ११ ॥

गम्भीर चुनौती सुनकर जब वह सह न सका
इसलिए, क्रोध में जाकर उससे युद्ध किया।
पर, वाली उससे जीत न पाया महाबली
शत्रु-चुनौती को कभी न अस्वीकार किया ॥ १२ ॥

तब बोला दरभी से—'हे महिषराज !
कल होगा युद्ध परस्पर गिरिकन्दरा मध्य।'
'ठीक है', कहा उसने वाली से 'महावीर !
जैसी इच्छा आपकी, वही हो यहाँ सत्य ॥ १३ ॥

वाली ने बन्धु सुग्रीव से कहा—सुनो,
हे बन्धु ! गुहा-द्वार पर ही तुम रहना।
रक्त-प्रवाह देखना होगा वहां तुम्हें
उससे अनुमान लगाना विजय-पराजय का ॥ १४ ॥

दिख पड़े कहीं यदि रक्त वहाँ पर कृष्ण वर्ण
तो सहज समझ लेना कि महिष वध किया गया।

तदन्यथात्वेऽनुमिनोत्वसौ यद्
भ्राताऽस्य वाली निहतो युधीति ।। 15 ।।

एवं प्रबोध्यानुजमेष योद्धुं
गुहां परेद्युः प्रविवेश वाली ।
तिष्ठंस्तदीये वचनेऽनुजश्च
गुहामुखे दत्तमुखः स्थितोऽभूत् ।। 16 ।।

कालो व्यतीयाय यदा तु कश्चिद्
घोरं प्रवृत्तस्य नियोधनस्य ।
तदा प्रवृत्तो घनघोरवर्षी
देवो वने वर्षितुमात्तवेगः ।। 17 ।।

अत्रान्तरेऽभून्निहतो नियुद्धे
श्रीवालिनाऽसौ महिषो दुरात्मा ।
प्रवाहिता यस्य बभूव कायाद्
रक्तस्य धाराऽगुरुनिम्नगेव ।। 18 ।।

सम्मिश्रणाद् वृष्टिजलस्य तस्यां
कृष्णत्वमालक्ष्यत नैव तस्याः ।
भ्रान्तिं गतो यद्वशतोऽग्रजो मे
हतोऽस्ति सुग्रीव इति प्रपेदे ।। 19 ।।

ततो गुहातो बहिरागमस्य
कर्तुं निरोधं महिषस्य तावत् ।
गुहामुखं सोऽपिहितं व्यधत्त
निरन्तरं तत्र शिलोच्चयेन ।। 20 ।।

यदि लाल रंग का रक्त तुम्हें दिख पड़े वहाँ
तो यही समझना बंधु वाली ही वधा गया ॥ १५ ॥

भाई को समझा इस भाँति युद्ध के लिए
अगले दिवस वाली ने गुहा-प्रवेश किया।
सुग्रीव बन्धु-वचनानुसार था रुका वहीं
कन्दरा द्वार की ओर निरन्तर ध्यान किया ॥ १६ ॥

उस समय भिड़े थे द्वन्द्व-युद्ध में वे दोनों
इस भाँति वहाँ कुछ समय सहज ही बीत गया।
तब तक तो होने लगी घोर वर्षा सहसा
उस वन में वर्षा का प्रवेश उस समय बढ़ा ॥ १७ ॥

इस बीच परस्पर द्वन्द्व-युद्ध में वधा गया
श्री वाली के हाथों वह महिष दुष्टात्मा भी।
उसके शरीर से हुई प्रवाहित रक्तधार
लगती थी जैसे अगरु नदी की धारा हो ॥ १८ ॥

वर्षा के जल में मिल जाने के कारण ही
रक्त-कालिमा का आभास न हो पाया।
भ्रम में पड़ गया वालि-अनुज इस कारण से
हो गया बन्धु का वध, वह यही समझ पाया ॥ १९ ॥

इसलिए, गुहा के बाहर आने वाले का
उस महिषराज का मार्ग रोकना ठीक यहाँ।
ऐसा विचार कर गुहा-द्वार को बन्द किया
लाकर के शिलाखण्ड रखता ही रहा वहाँ ॥ २० ॥

प्रत्यर्थिनं स्वं विनिहत्य यावद्
गुहामुखान्निष्क्रमणाय वाली ।
उपैति तत्तावदसावपश्यत्
प्रपूरितं दीर्घशिलोच्चयेन ।। 21 ।।

प्रयत्नमास्थाय तदा महान्तं
वाली शिलौघं स पृथक् चकार ।
आगन्तुमीशश्च यथाकथञ्चिद्
बहिर्गुहातः स बभूव वीरः ।। 22 ।।

सुग्रीव एनं ननु कस्य हेतो-
र्गुहामुखे स्थापितवान् शिलौघम् ।
इत्येव सञ्चिन्तनतत्परस्य
बुद्धिभ्रमः प्रादुरभूदनिष्टः ।। 23 ।।

स्यान्नाम राज्ये मम गृध्नुरेष
मन्मृत्युमाकाङ्क्षति मेऽनुजोऽपि ।
अहं गुहायां विलयं प्रयाया-
मित्येव चेतस्यभिसन्धिरस्य ।। 24 ।।

अहो! दुरात्माऽयमतीव पापी
यो भ्रातुरेवेच्छति नाम मृत्युम् ।
विचिन्तयन्नेवमसौ बभूव
क्रोधानलोद्दीप्तमना मनस्वी ।। 25 ।।

उपेयिवांश्च स्वकराजधानीं
सुग्रीवमस्याः स बहिश्चकार ।

तब तक अपने प्रत्यर्थी का वध करके वह
वाली चाहता गुहा-मुख के बाहर आना।
कर पहुंच द्वार पर उसकी दृष्टि पड़ी बाहर
तब पाया लगा था दीर्घ शिलाओं का ढकना॥ २१ ॥

तब महत्प्रयास किया वाली ने किसी भाँति
उस शिलापुंज को उठा, द्वार से पृथक् किया।
जैसे-तैसे निष्क्रमण हेतु अभिलाषा से
वह वीर गुहा के बाहर सहसा निकल गया॥ २२ ॥

सोचा—सुग्रीव भला किस कारण शिलापुंज
स्थापित करके गया इसे कन्दरा-द्वार।
ऐसे चिन्तन में तत्पर होते ही उसकी
मति भ्रमित हुई, जागे अनिष्टमय दुर्विचार॥ २३ ॥

लगता है इसकी दृष्टि राज्य पर लगी हुई
चाहता हमारी मृत्यु हमारा बन्धु स्वयम्।
मर जाय कन्दरा मध्य वाली निःसंशय वह
ऐसा ही मन में निश्चय करता रहा स्वयम्॥ २४ ॥

यह है दुरात्मा तथा घोर पातकी कि जो
अपने भाई की मृत्यु चाहता पापी यह।
इस भाँति सोचते हुए वाली हो गया तुरत
क्रोधानल के कारण उद्दीप्त, मनस्वी वह॥ २५ ॥

तदनन्तर वह आ गया राजधानी अपनी
उसने आकर सुग्रीवराज को भगा दिया।

नैवाशृणोत्तस्य वचश्च रोषाद्
बुद्धिभ्रमस्तस्य दृढो बभूव ।।26।।

पृथक्कृतोऽसौ सुतरां निरागाः
सुग्रीव आसीन्मनसाऽतिरुग्णः ।
विनाऽपराधं नहि कस्य चेतो-
ऽवमानना दुःखभरं तनोति ।।27।।

क्रोधात्स सम्प्रार्तथत स्वकस्य
भ्रातुर्वधं राघववीरमुख्यम् ।
सम्पादनं तस्य च सोऽचिरेण
तं राघवः प्रत्यशृणोच्छरण्यः ।।28।।

नियोधने वालिनमाह्वयस्वे-
त्येवं स सुग्रीवमुवाच वीरः ।
तथा चकारापि च तद्गिराऽसौ
वाली नियोद्धुं च समाजगाम ।।29।।

वृत्ते नियुद्धे च ककुत्स्थवंश्यः
शरेण वृक्षान्तरितो जघान ।
सुग्रीवराजाग्रजमुग्रबुद्धिं
राज्ये च सुग्रीवमथाभ्यषिञ्चत् ।।30।।

साहाय्यमस्य प्रतिशुश्रुवान्स
विदेहजायाः पुनराप्तिहेतोः ।
सुग्रीवराजः प्रथमोपकार-
कृतज्ञतामात्मनि सन्दधानः ।।31।।

वह कुपित हृदय था, सुनी न उसकी एक बात
बुद्धि-भ्रम ने उसको ऐसा दृढ़ बना दिया ॥ २६ ॥

'त्रुटि हुई न, फिर भी मुझे राज्य से पृथक् किया'
सुग्रीव सोचकर यही दुःखित हो उठा सहज।
अपराध बिना यदि होती अवमानना कभी
है कौन? न जिसके मन में दुःख भरता सहज ॥ २७ ॥

उसको भी आया क्रोध निवेदन किया तभी
रघुवीर राम से, भाई के वध हेतु स्वयम्।
शीघ्रातिशीघ्र सम्पादन हो इसका निश्चित
राघव ने उसको शरण-दान है दिया स्वयम्। २८ ॥

तब रामभद्र सुग्रीवराज से बोल पड़े—
'ललकारो जाकर द्वन्द्व हेतु वाली को तुम।
था किया राम के कहने से वैसा उसने
वाली से करने द्वन्द्व युद्ध वह चला आये ॥ २९ ॥

उनका हो रहा परस्पर जब तक द्वन्द्व-युद्ध
राम ने आड़ ले तरु की वाली को मार दिया।
वध किया वाली का, उग्रबुद्धि जो था, फिर तो
सुग्रीव का राम ने सिंहासनाभिषेक किया ॥ ३० ॥

सुग्रीवराज ने सीता जी की खोज हेतु
राम-सहायता के लिए मन में ठान लिया।
जो किया राम ने पहले ही उपकार उसे
उसने भी उसी कृतज्ञता का ध्यान किया ॥ ३१ ॥

पुत्रीकृतो वालिसुतोऽङ्गदोऽपि
साह्याय सम्प्रैर्यत तेन वीरः ।
अन्येऽपि ये नीलफदादयस्ते
सम्प्रेरितास्तेन सहायतायै ।। 32 ।।

सर्वा चमूस्तस्य विशालरूपा
सुग्रीवराजस्य समुद्रगेव ।
लङ्कापुरीं जेतुमुपात्तभावा
समुद्रतीरं समभिप्रपन्ना ।। 33 ।।

ततोऽनु विद्वान् हनुमाञ्जगाम
लङ्कापुरीं तत्र ददर्श चापि ।
सीतामभिज्ञानमुपानयन्सो-
ऽङ्गुलीयकं दाशरथिप्रदत्तम् ।। 34 ।।

निवर्तमानश्च ततः स लङ्कां
दग्धात्स्वपुच्छाद्दनुजैर्नृशंसैः ।
ददाह हाहाकृतमास्त येन
स्वाहाकृतञ्चापि समस्तपुर्याम् ।। 35 ।।

(द्रुतविलम्बितवृत्तम्)

तदनु दाशरथिं समुपेयिवान्
सकलवृत्तमुवाच कपिर्बुधः ।
स च सहायवृतोऽभवदुद्यतो
दशमुखाक्रमणाय विवेकवान् ।। 36 ।।

वाली-सुत अंगद को भी निज पुत्र मान
उसको सुनियोजित किया राम के कार्य हेतु ।
साथ में नीलफद आदि कर दिये गये कई
उसने भेजा सब को उसके साह्य हेतु ॥ ३२ ॥

सुग्रीवराज की सारी सेना अति विशाल
सरिता-प्रवाह के ही समान चल पड़ी वहाँ ।
लंका पर विजय प्राप्त करने का भाव लिये
सारी सेना जा पहुँजी सागर-तीर जहाँ ॥ ३३ ॥

तदनन्तर ज्ञानी हनुमान चल पड़े शीघ्र
जाकर देखी लंका नगरी वहाँ स्वयम् ।
जो भेजी थी अंगूठी रामभद्र ने उन्हें
पहचान हेतु सीता को दिखला दी वहाँ स्वयम् ॥ ३४ ॥

लौटते समय लंका नगरी से हनुमत् की
पूछ में राक्षसों ने आग लगायी थी ।
कपि ने उससे नगरी को तुरत जलाया था
था हाहाकार मचा, विपदा घिर आयी थी ॥ ३५ ॥

लौटकर हनुमान ने श्रीराम को
था निवेदित कर दिया वृत्तान्त सब ।
वे सहायक से घिरे, निश्चय किया
दुष्ट रावण पर, आक्रमण हेतु तब ॥ ३६ ॥

# नवमः सर्गः

## (रावणस्वप्नोपाख्यानं रामशिबिरे
## गुप्तचरसम्प्रेषणोपाख्यानं च)

(मन्दाक्रान्तावृत्तम् )

लङ्कां यद्यप्यदहदखिलां वायुपुत्रस्तरस्वी
नैतच्चिन्तामणुमपि मनस्यातनोद् गर्वितस्य ।
पौलस्त्यस्य प्रथितयशसो लोकलोकैकजेतु-
र्धीरा आपद्यपि निपतिता नैव मुञ्चन्ति धैर्यम् ।।1।।

अल्पेनैवासुरपुरपतिः कालखण्डेन लङ्कां
तेने दीप्रां पुनरिति परं विस्मयं तद्वितेने ।
संस्कारोऽस्यै मुहुरपि ददे काम्यकान्तिं प्रभूतां
येनात्यर्थं कनकवदियं तप्तवर्णा बभासे ।।2।।

लङ्का यस्मादभवदधिकं पूर्वतोऽपि प्रदीप्रा
पूर्णा भोगै रुचिरतरकैर्देवलोकेऽपि काम्यैः ।
तेनात्यर्थं सुखमनुभवन् रावणस्तां शशास
देवैर्यक्षैरुरगपतिभिः पूज्यमानोऽसुरैश्च ।।3।।

सेयं शान्तिर्नहि चिरमवातिष्ठतामुष्य चित्ते
किञ्चिन्नैव स्थिरमिह जगत्यस्ति सञ्चारशीले ।

# नवम सर्ग

**(रावणस्वप्नोपाख्यान और रामशिबिरे में गुप्तचरसम्प्रेषणोपाख्यान )**

यद्यपि हनुमान जला बैठे लंका सारी
फिर भी रावण के मन में चिन्ता हुई नहीं।
वह दिग्विजयी, विख्यात यशस्वी धैर्यवान्
सच है, विपत्ति में धीर, धैर्य त्यागते नहीं ॥ १ ॥

फिर, स्वल्पकाल में दानवपति ने लंका को
कर दिया अलंकृत, यही देखकर विस्मित सब।
आकर्षक लगी अधिक जब पुनरुद्धार हुआ
जिससे वह दिखती तप्त स्वर्ण-सी अब ॥ २ ॥

लंका पहले से अधिक मनोहर दिखी यथा
सम्पूर्ण भोग से रुचिर स्वर्ग सुख समन्विता।
आनन्दपूर्वक राज्य वहाँ करता रावण
सुर-असुर-नागपति यज्ञों से सम्पूज्य तथा ॥ ३ ॥

वह शान्ति न उसके मन में स्थिर रह पायी
संचरणशील इस जग में कुछ स्थिर न रहा।
फिर, एक रात सुख से सोया, देखा सपना
जिससे उसके चित्त की वृत्ति में भेद हुआ ॥ ४ ॥

सुप्तो रात्रावयमतिसुखी स्वप्नमेकं ददर्श
कस्याञ्चिद्योऽजनयदभितोऽस्यान्यथावृत्ति चेतः ।।4।।

तस्मिन्स्वप्नेऽतितुमुलतया युध्यमानौ ददर्श
श्येनावेकोऽभवदिह ययोः कृष्णवर्णस्तथा च ।
आसीदेकोऽतिधवलरुचिर्येन कृष्णो हतोऽभूत्
प्रत्यग्दिग्भागत उपगतः पूर्वकाष्ठागतेन ।।5।।

तत्पश्चात्स स्वककरगते कोटरे नारिकेले
तैलासेकं विदधतमहो स्वं ददर्शातिमुग्धः ।
वर्तिं तस्मिन् निदधतमसौ स्वं यदा पश्यति द्राग्
योषा तत्रापतति सहसाऽदृष्टपूर्वा कुतश्चित् ।।6 ।।

वर्तिं सा प्रज्वलयति तदा येन तत् कोटरं द्राग्
दग्धं वह्निः करतलमनु प्राविशच्चापि तस्य ।
सर्वः कायस्तदनु सुतरामन्वभूद्वह्निदाहं
तस्मिन्काले झटिति शयनादुत्थितोऽभूद्दनूजः ।।7 ।।

स्वप्नद्वय्या क्रकचयुगलाभिख्यतामादधत्या
शङ्काजालैः प्रबलतरकैर्दीर्यमाणान्तरङ्गः ।
स्वप्नव्याख्यां स निजमनुजं पृष्टवान् बुद्धिमन्तं
ब्रूहि भ्रातः फलमिह शुभं वाऽशुभं स्वप्नयोर्मे ।।8 ।।

तं सम्प्रोचे नयविनयमानग्रजं स्वप्नशास्त्र-
धुर्यो भ्रातः! शृणु फलमिह प्रोच्यमानं मयाऽत्र ।
स्वप्नावेतौ सुभृशमशुभौ कष्टसंसूचकौ ते
दुख्यच्चेताः कथमपि तयोर्वच्म्यनिष्टं फलं ते ।।9।।

उस सपने में उसने घनघोर युद्ध देखा
लड़ रहे जहाँ दो श्येन, एक का रंग श्याम ।
दूसरा श्वेत था, पूर्व दिशा से आया था
वध कर दिया उसने श्येन का पश्चिम से जो आया था ॥ ५ ॥

अचरज से देखा नारिकेल के कोटर में
भर रहा तेल वह स्वयं, देखकर मुग्ध हुआ ।
उसमें वर्तिका रखी तो देखा तुरत एक
आयी थी युवती कोई अदृष्टपूर्वा वहाँ ॥ ६ ॥

फिर युवती ने वर्तिका जला दी, कोटर वह
जल उठा, हथेली में रावण के बढ़ी आग ।
जब आग बढ़ चली राक्षस की कायामध्य तुरत
बस, उसी समय रावण भी सहसा गया जाग ॥ ७ ॥

उन दो सपनों से मन उसका शंकालु बना
मानो दो आरों से विंध कर होता हतप्रभ ।
पूछी उनकी व्याख्या निज अनुज विभीषण से—
'हे बन्धु ! बताओ, स्वप्न अशुभ हैं अथवा शुभ ॥ ८ ॥

वह स्वप्न शास्त्र का ज्ञाता भाई से बोला—
'हे बन्धु ! सुनो, है महा अशुभ सपनों का फल ।
वे दोनों सपने हैं विपत्ति के सूचक ही
बतलाता हूं खेदपूर्वक अशुभ सपनों का फल ॥ ९ ॥

कृष्णः श्येनस्त्वमसि धवलश्चास्ति रामोऽभिरामो
हिंसा कार्ष्णी धवलविहिता तेऽन्तसंसूचिकाऽस्ति ।
लङ्कापुर्या विगणय विभो नारिकेलं प्रतीकं
तत्तैलं ते कुलमविकलं वह्निसाद्यद् भवेन्नु ।। 10 ।।

योषा स्वप्ने नयनविषयं या गता ते बभूव
दीपं यावज्ज्वलयति पुरा कोटरं नारिकेलम् ।
सा नौ भ्रातः सकलकलहद्वारभूता स्वसैव
वह्निज्वाला ऽति कुटिलधिया दीपिता भोस्तयैव ।। 11 ।।

ज्वाला भ्रातर्निजकरतलं याऽनुभूता दहन्ती
सैषा साध्वी जनकतनया त्वद्विनाशैकहेतुः ।
तां त्वं शान्त्या दशरथसुतं द्राग् विनिर्यातयस्व
रक्षाथो च प्रियमिह कुलं राक्षसानां समस्तम् ।। 12 ।।

इत्थङ्कारं वचनरचनां संविरच्यात्मनीने
तूष्णीम्भूते दनुजकुलजे स्वेऽनुजे क्रोधताम्रः ।
पौलस्त्यस्तं परुषवचनैभर्त्सयामास तीव्रं
रज्जुच्छेदे घटमिव नु को धारयेत् सद्वचोऽज्ञः? ।। 13 ।।

निर्यात्या मे जनकतनयेत्येवमात्थात्र यत्त्वं
तत्ते नूनं कलुषहृदयं स्पष्टमाविष्करोति ।
भ्राता मे त्वं कथमिव नु मे राघवान्नाशमात्थ
लङ्कायां त्वं निवससि परं शत्रुपक्षे स्थितोऽसि ।। 14 ।।

शक्तिं न्यूनां गणयसि कथं राघवान्मे विजेतु-
र्दिक्पालानां सकलभुवनस्पृह्यकीर्तेर्विमूढ ।

वह कृष्णवर्ण का श्येन स्वयं तुम, धवल वर्ण
अभिराम राम हैं, वध उसका कि तुम्हारा वध।
यह लंकापुरी नारियल का प्रतीक समझो
तेल तुम्हारा कुल है, जो होगा भस्म सहज ॥ १० ॥

वह युवती दीप जलाती जो देखी तुमने
वह बहन हमारी संघर्षों का जो कारण।
कुटिल बुद्धि, मन उसका सकल कलह संभृत
वह अग्नि ज्वाल भी प्रकट हुई उसके कारण ॥ ११ ॥

वह लपट हथेली जिससे जली तुम्हारी थी
सीता हैं, जो तव सर्वनाथ का कारण अब।
इसलिए, उन्हें अतिशीघ्र राम को लौटा दो
सारे राक्षस कुल की रक्षा तुम कर लो अब ॥ १२ ॥

इस भाँति सद्वचन कर शान्त विभीषण, था
अति शुद्ध हृदय, रावण को उस पर हुआ क्रोध।
अत्यन्त परुष वचनों से तीव्र भर्त्सना की
टूटी रस्सी से कौन थामता-घट, अबोध ॥ १३ ॥

'क्या कहा ? कि सीता को लौटा दूं ? इससे ही
इस समय तुम्हारा कलुष हृदय स्पष्ट हुआ।
भाई होकर, कह रहे राम से मेरा वध
लंका में रहकर रिपु का तुमने पक्ष लिया ॥ १४ ॥

दिक्पाल-त्रिलोक विजेता, जिसकी व्याप्त कीर्ति
उस रावण को कह रहा राम से न्यून मूढ !

क्वाहं वीरो जगति विदितो राक्षसानामधीशो
राज्याद् भ्रष्टो वनमधिवसन् राघवो वा पुनः क्व ।। 15 ।।

तं तादृक्षं मशकमिव भोः स्वेच्छयैवोपपन्नं
निष्पीड्याऽहं करतलगतं हेलयैव प्रसन्नः ।
मामाक्रान्तुं कृतपरिकरं स्वस्य मृत्युं यथैव
रामं रामाविरहजरुजं प्रापयिष्याम्यनन्ताम् ।। 16 ।।

नाम्नैवास्से दनुजकुलजो भीषणस्त्वं विशेषाद्
यत्सत्यं मे विगतमिव ते भीषणत्वं विभाति ।
यस्त्वं रामं दशरथसुतं वन्यवेषं ब्रवीषि
मृत्युं मे भोस्त्रिभुवनजयस्फीतबाहुद्वयस्य ।। 17 ।।

वस्तुं सत्यं मयि न सुतरामर्हसि त्वं विमूढो
निर्गच्छेतस्स्वयमहमुत त्वामह शत्रुपक्ष्यम् ।
लङ्कापुर्याः पृथगनुचरैः सावमानं करोमि
स्वाङ्गं चेत्स्याद् वपुषि गलितं तद् बहिष्कार्यमेव ।। 18 ।।

श्रुत्वा भ्रातुः परुषवचनं सर्वथाऽशान्तचित्तः
स्वप्नव्याख्याविधिविधिवशात्प्राप्तभूयोपमानः ।
याप्ये रोगे भिषगिव रुजाक्रान्तकायं नरं स
सन्त्यज्यायादवमतिशिखिज्वालया दह्यमानः ।। 19 ।।

रामञ्चाऽऽयात्सपदि शरणं तं शरण्यं विपश्चित्
तं चाप्याख्यत्कृतचरमभूद्यद्दशास्येन तस्मिन् ।
भक्तिप्रह्वश्चरणकमले राघवस्य प्रणम्य
स्वं स्वीकर्तुं प्रभुमयमहो! प्रार्थयामास धीरः ।। 20 ।।

दानवपति वीर जगद्विख्यात कहाँ रावण
राज्यच्युत-वनवासी वह राघव कहाँ मूढ ॥ १५ ॥

स्वेच्छा से करतलगत मशक तुल्य
वह निश्चय ही बिना प्रयास नष्ट होगा।
मुझ पर आक्रमण करे तो उसकी मृत्यु नियत
पत्नी-वियोग के दुःख का अनुभव भी होगा ॥ १६ ॥

तुम दानवकुलोत्पन्न 'विभीषण' नाम मात्र
पर, लगता, तेरा नष्ट हुआ वह भीषणत्व।
तू पड़ा वन्यवेषी राघव के चक्कर में
मुझ दिग्वजयी की सहज मृत्यु कह रहा, अस्तु ॥ १७ ॥

वस्तुतः शत्रुपक्षी तू निकल यहाँ से अब
तेरा लंका में रहना मूढ ! दिखे अनुचित।
अन्यथा अनुचरों से होगा अपमानित तू
जो अंग गलित हो उसका है काटना उचित ॥ १८ ॥

बन्धु के परुष वचनों को सुनकर अति अशान्त
स्वप्न की व्याख्या करने से अति अपमानित।
वह परमशान्त था निकल गया, वैद्य भी यथा
तज देता है असाध्य रोगी को, समझ उचित ॥ १९ ॥

तब गया राम के पास, शरण मांगी उसने
रावण द्वारा अपमान-वृत्त भी बता दिया।
राघव के चरण कमल में श्रद्धानत हो
'हे प्रभो' करो स्वीकार प्रार्थना यही कहा ॥ २० ॥

मृदु-हृदय राम ने सब सुनकर स्वीकार किया
जो शत्रुपक्ष से था, फिर भी, प्रेम से उसे।

वृत्तं श्रुत्वाऽतिमृदुहृदयो राघवः स्वीचकार
शत्रोः पक्षादुपगतमपि प्रेमभावात्तमाशु ।
तत्पश्चात्तौ परमसुहृदौ प्रत्ययं धारयन्ता-
वन्योन्यस्मिन् कमपि समयं निन्यतुः स्वं सुखेन ।। 21 ।।

रामं भ्रातुः परिगतवतो राक्षसानामधीश-
स्यासीत् पूर्वं कपिवरभटैः संस्तवोऽदृष्टपूर्वः ।
तत्र प्राप्तेः प्रथममभवत्तस्य चित्तं सचिन्तं
शक्त्या युक्ताः क्व दनुजभटा वानराः क्व श्लथाङ्गाः ।। 22 ।।

रामस्याप्तः शिबिरमनघस्तान्यदा सन्ददर्श
चित्रीयायाः परमुपगतः पारमासीत् स दैत्यः ।
शक्ताः किं स्युर्दनुजकुलजैर्योद्धुमेते कपीन्द्रा
इत्याशङ्कां निजमनसिजां सोऽथ सुग्रीवमाह ।। 23 ।।

सुग्रीवस्तांस्तदनु स कपीनादिशच्छक्तिमेनं
वीराः! सद्यो दनुजकुलजं दर्शयध्वं स्वकीयाम् ।
जानीयात्सोऽप्यविदितचरीं येन वः शक्तिमद्य
साक्षाद् दृष्टे भवति सुतरां प्रत्ययो नात्र शङ्का ।। 24 ।।

तच्छ्रुत्वा ते वचनममलं यूथमुख्यस्य दीप्ताः
शक्तेः स्वस्याः परिचयविधौ स्वं मनो दत्तवन्तः ।
वृक्षान् केचिद् विपुलतरकान्केचिदेवापि चाद्रीन्
मूलोच्छेदं करतलगताञ्चक्रिरे साहसेन ।। 25 ।।

अन्ये तावद् दृढतरधियः सूर्यमावव्रिरे द्राग्
जातं विश्वं प्रबलतमसाऽऽच्छादितं येन विश्वम् ।

तदनन्तर परम सुहृद् माना विश्वस्त किया
इस भांति बिताते रहे समय दोनों सुख से ॥ २१ ॥

जब गया राक्षसपति-भ्राता राम निकट
समझा कपि होंगे वीर क्योंकि देखा न उन्हें ।
वह लगा सोचने कहाँ अधिक बलवान् दनुज
पर कहाँ दीन-दुर्बल कपि हैं, देखकर उन्हें ॥ २२ ॥

राम के शिबिर में वानरगण को देख देख
उस समय विभीषण को अतीव आश्चर्य हुआ
क्या लड़ सकते वानर उन राक्षस वीरों से
अपने मन की आशंका को कपिपति से व्यक्त किया ॥ २३ ॥

आदेश दिया सुग्रीवराज ने कपियों को
'हे वीरों ! निज पौरुष दिखला दो दानव को ।
जिससे यह जाने आज हमारी शक्ति यहाँ
साक्षात्-देखकर शंका कब होगी किसको ॥ २४ ॥

कपिपति के सुनकर वचन शक्ति संपन्न वीर
सोचने लगे कि किस विधि परिचय दिखलायें ।
कुछ ने तरु लिये उखाड़ और कुछ पर्वत को
जड़ से उन्मूलित कर कर-तल पर वे ले आये ॥ २५ ॥

दूसरों ने दृढ़तापूर्वक सूर्य को ढका शीघ्र
जिससे सारा संसार अन्ध तामिस्र हुआ ।

केचिच्चाथो पवनमबलं तेनिरे स्वस्य वेगा-
दन्ये चाथो जलधिमतुलं शुष्कतां नीतवन्तः ।। 26 ।।

दृष्ट्वा दृश्यं तदखिलमभूद्विस्मयाविष्टचेता
हृष्यद्रोमा निजनयनयोर्विश्वसन्नो महात्मा ।
पौलस्त्यस्यावरज इति तं प्राह सुग्रीवराजं
भास्वद्वक्त्रं दशरथसुतेऽत्यन्तरक्तं कपीन्द्रम् ।। 27 ।।

शक्तिर्या ऽभूत् सपदि भवतां सैन्यसङ्घस्य दृष्टा
नातः पूर्वं कुहचन मयाऽऽलोकितेति ब्रवीमि ।
यत्सत्यं ते कपिवरभटा राक्षसैर्योद्धुमर्हा
एषां शक्त्या रघुवरजयं निश्चितं तर्कयामि ।। 28 ।।

योऽभूच्छब्दस्तरुगिरिशतव्रातसन्दारणोत्थो
व्याप्नोत्सोऽयं सकलभुवनं नादयन् दिग्दिगन्तान् ।
लङ्कापुर्यामपि गतवता राक्षसेन्द्रस्य तेन
स्पृष्टास्तावच्छ्रवणकुहरा[1] विस्मयाविष्टबुद्धेः ।। 29 ।।

कोऽयं शब्दः कुत इत इतः किङ्कृतो वा किमर्थं
वाऽयं लोके जनित इति स स्वाञ्जनानन्वयुङ्क्त ।
ते तं प्रोचुः कपिवरभटै राघवस्यैष चम्वा
शब्दो भीमो जनित इह यो विस्मयं नस्तनोति ।। 30 ।।

तच्छ्रुत्वाऽसौ रिपुकुलगतं वृत्तमिच्छन्निबोद्धुं
सर्वं सूक्ष्मं प्रणिधिमकरोच्छुक्रसाराख्यमेकम् ।
रक्षोवीरं च तमचकथद्रामभद्रस्य सैन्यं
यातुं द्रष्टुं विदधति भटा यत्तदर्थं प्रवृत्ताः ।। 31 ।।

1. दशास्यस्य तस्य नाना श्रवणकुहरा इति बहुवचनप्रयोगः ।

कुछ ने निजबल से वायुवेग को घटा दिया
औरों ने सागर के जल को था शुष्क किया ॥ २६ ॥

यह दृश्य देखकर विस्मित हुआ विभीषण था
रोमांचित था, विश्वास आँख पर नहीं हुआ ।
तदनन्तर दानववंशश्रेष्ठ ने, राम-भक्त
सुग्रीवराज कपिपति से था इस भाँति कहा ॥ २७ ॥

'जो शक्ति-प्रदर्शन किया आपके कपियों ने
इस भाँति अलौकिक शक्ति न मुझको दिखी कहीं है ।
सत्यत: कवीन्द्र लड़ सकेंगे राक्षसगण से
इस परम शक्ति से रघुवर विजय सुनिश्चित है ॥ २८ ॥

शत शत गिरि-तरु-उन्मूलन की ध्वनि से सहसा
हो उठा व्याप्त उस समय सकल जगदिग्दिगन्ता ।
लंका नगरी में पहुंचा होगा नाद सहज
सुनकर दानवपति अचरज में वह पड़ा तुरत ॥ २९ ॥

यह कैसा नाद, कहाँ से, किया गया क्योंकर
रावण ने पूछा अपने सभाजनों से जब ?
वे बोले राघव-दल के शूरवीर कपियों की
यह भीम-भयंकर ध्वनि है जिससे विस्मित सब ॥ ३० ॥

यह सुन, रिपुदल का भेद जानने हेतु उसने
गुप्तचर बनाकर शुक्रसार को भेज दिया ।
हे वीर ! रामदल में जाकर देखो तुरन्त
उनके सैनिकगण ने क्यों ऐसा नाद किया ॥ ३१ ॥

(इन्द्रवज्रावृत्तम् उपजातिवृत्तञ्च)

श्येनाकृतिं स्वां विरचय्य दूतो
रामस्य तावच्छिबिरं विवेश।
तत्प्राप्तमात्रश्च कपिर्बभूवा-
निरीक्ष्यमाणोऽन्यकपिप्रवेकैः ।।32।।

विभीषणस्याथ न सूक्ष्मदृष्टे-
र्दृष्टिं परीहर्तुमसौ शशाक।
कपिस्वरूपेऽपि तमभ्यजानात्
तं रावणस्य प्रणिधिं स विज्ञः ।।33।।

इदं हनूमन्तमुवाच चापि
स चाप्यभिज्ञातुमिमं ववाञ्छ।
तदर्थमात्मानमतस्ततान
वितानरूपं पवनस्य पुत्रः ।।34।।

समादिदेशाथ कपिप्रवीरान्
एकैकमेतुं स तदन्तराशु।
ततश्च निर्यातुमिमं विधिं सो
ऽभिज्ञातुमाधादिह शुक्रसारम् ।।35।।

एनं विधिं सैष समाश्रितः सन्
ददर्श सूक्ष्मेक्षिकयैकमेकम्।
कपिं कपीनां प्रवरो विवेकी
शत्रोः स्पशं मार्गयितुं प्रवृत्तः ।।36।।

श्येन रूप धर दूत तभी
राघव के शिबिर में कर गया प्रवेश।
आते ही वह कपि हुआ, किन्तु
दूसरे न समझे छद्मवेष ॥ ३२ ॥

अतिसूक्ष्म दृष्टि विभीषण की
उससे न दैत्य वह बच पाया।
वह समझ गया कपि रूप धरे
गुप्तचर रावण का है आया ॥ ३३ ॥

हनुमत् को सूचित किया यही
वह भी जानना चाहता इसे।
वायु के पुत्र ने एतदर्थ
निज को तम्बू सा तान लिये ॥ ३४ ॥

'आदेश दिया उसने कपि सेना को तुरन्त
उसमें प्रवेश के लिए तथा निष्क्रमण-हेतु।
क्रम से बाहर जाना है जिससे सहजतया
ऐसा उपाय था शुक्रसार-पहचान हेतु ॥ ३५ ॥

करके उपाय इस भाँति उस समय हनुमान्
देखा हर कपि को सूक्ष्म दष्टि से बार-बार।
इस भाँति खोजने लगा वहाँ कपिश्रेष्ठ उसे
जो रावण का गुप्तचर घुसा था शुक्रसार ॥ ३६ ॥

कपिस्वरूपेण विवेश धूर्तः
क्रमाद्यदा तत्र तु शुक्रसारः ।
निमेषहीनाक्षियुगेन जज्ञे
छायाविहीनत्ववशेन चापि ।। 37 ।।

दैत्यं कपिस्तं निगृहीतवांश्च
कशाभिघातं हतवान्दृढं च ।
चिह्नानि सर्वावयवेषु तस्य
कृत्वा व्यमुञ्चच्च विलज्जितं सः ।। 38 ।।

लङ्कानरेशं स समभ्युपेतो
न्यवीविदत्तं निजवृत्तजातम् ।
शौर्यं कपीनां तमबोधयच्च
वैलक्ष्यशल्यं हृदये दधानः ।। 39 ।।

मोघे प्रयत्ने प्रणिधेः प्रजाते
स्वयं दशास्यः कृतसाधुवेशः ।
रामस्य सेनामनुसम्प्रविष्टो
दुष्टाभिसन्धिर्मकरो यथाऽब्धिम् ।। 40 ।।

तपस्विवेषेऽपि विभीषणेना-
भिज्ञात आसीत्कपटी तथाऽपि ।
मन्त्रप्रभावेण गतः स तूष्णी-
म्भावं न वक्तुं प्रबभूव किञ्चित् ।। 41 ।।

रामः पुरस्तादवलोक्य साधुं
तं पूजयाञ्चक्र उवाच चापि ।

कपि के स्वरूप में धूर्त, गुप्तचर घुसा वहाँ
क्रम से पहचाना गया कि जब वह शुक्रसार।
इसलिए कि उसके नयन निमेषहीन लगते
छाया विहीन काया भी दिखती लगातार ॥ ३७ ॥

कपि ने उस दानव को तदनन्तर पकड़ लिया
पीटा कोड़े से उसने उसको बहुत वहाँ।
आघात चिन्ह सारे शरीर पर करके ही
उस लज्जित राक्षस को फिर छोड़ा गया वहाँ ॥ ३८ ॥

वह शुक्रसार तत्काल पहुंचा लंका में
रावण से उसने सारा निज वृत्तान्त कहा।
अपमान शल्य धारण करके निज हृदय मध्य
वानर-वीरों का शौर्य बोध स्पष्ट किया ॥ ३९ ॥

गुप्तचर-प्रयत्न से कार्य नहीं बन पाया जब
दशमुख ने स्वयं साधु का वेष बनाया था।
श्री रामभद्र की सेना मध्य प्रविष्ट हुआ
थी दुष्प्रवृत्ति, मकर ज्यों सिन्धु समाया था ॥ ४० ॥

यद्यपि कपटी रावण था साधुवेषधारी
फिर भी, उसे विभीषण ने पहचान लिया।
मान्त्रिक प्रभाव के कारण वह रह गया मौन
उस समय बोलने का उसने न प्रयास किया ॥ ४१ ॥

राम ने सामने देखा साधु-तपस्वी को
उस वेष मात्र से गदगद उनका हृदय हुआ।

वस्तुस्थितिं नो कलयाऽपि जानं-
स्तद्द्वेषमात्रेण हतान्तरङ्गः ।। 42 ।।

कुतो भवानत्र मदीयभाग्यात्
प्राप्तोऽस्ति सम्भावयितुं स्वयं माम् ।
तपस्विनां दर्शनमेव पुण्यं
तेषां गिरः पुण्यतरास्ततोऽपि ।। 43 ।।

सम्भावनां वर्धयितुं मदीया-
माख्यातु मां किङ्करणीयमस्ति ।
मया नियोगक्रिययोत्सुकेन
सेवा सतां सत्फलदायिनी स्यात् ।। 44 ।।

श्रुत्वादसीयं वचनं दशास्य-
श्छद्मस्वरूपस्तमुवाच वाचम् ।
काम्यं न मे किञ्चिदपीह लोके
परोपकाराय ममास्ति कायः ।। 45 ।।

श्रुतं मया यद्दशकन्धरं त्व-
माक्रान्तुकामः कपिसेनयाऽसि ।
सोऽयं न कामोऽस्ति तवाभिरामो
नाशोऽत्र ते स्यात्परिणाम एव ।। 46 ।।

त्वां राम तस्मात्परिबोधये मा
दशास्यवह्नौ शलभायितो भूः ।
त्रैलोक्यजेता क्व स राक्षसेन्द्रैः
परीवृतस्त्वं क्व च वानरैर्भोः ।। 47 ।।

जानते न थे वे वस्तुस्थिति फिर भी उसकी
पूजा करके उससे सहसा यह वचन कहा ॥ ४२ ॥

'आगमन कहाँ से हुआ आपका, अहोभाग्य
मेरा है जो कि मुझे आपने दिया मान !
है तपस्वियों के दर्शन से ही पुण्यलाभ
उनकी वाणी भी अधिक पुण्य का ही प्रमाण ॥ ४३ ॥

कहिए हे साधु ! आपकी सेवा के हितार्थ
कुछ करने की अभिलाषा मेरी अधिक प्रबल ।
मैं भी उत्सुक हो रहा कर रहा आस आज्ञा की
सन्तों की सेवा देती है सदैव सुफल ॥ ४४ ॥

सुनकर श्री रामभद्र के वचन दशानन भी
निज छद्मवेष में उनसे बोला वचन यही ।
'कामना न मेरी है कुछ भी संसार मध्य
मेरी काया है पर-उपकार हितार्थ सही ॥ ४५ ॥

मैंने ऐसा है सुना कि तुम कपि सेना ले
रावण पर करना चाह रहे आक्रमण सहज ।
यह कार्य तुम्हारा नहीं कभी सुखदायक है
इसका फल तो है नाश तुम्हारा यहाँ सहज ॥ ४६ ॥

इसलिए राम ! समझता हूं तुमको यो, मत
होना रावण की अग्निमध्य तुम शलभ वहाँ ।
त्रिभुवन विजयी है कहाँ दशानन दानवपति
कहां तुम वानर सेना से घिरे यहाँ ॥ ४७ ॥

दुःसाहसं त्वं त्यज याहि चापि
भ्रात्रा समं काननमेव भूयः ।
विवेकिनो नो सहसा क्रमन्ते
पथा ध्रुवं येन भवेद्विनाशः ।। 48 ।।

आकर्ण्य तस्याप्रियवाक्यजालं
तान्तान्तरङ्गोऽपि बहिः प्रशान्तः ।
काल्यं वचश्छद्मतपस्विनि द्राक्
प्रावर्तयद् दाशरथिर्महात्मा ।। 49 ।।

भार्या हृता मेऽधमराक्षसेन
ततोऽस्ति मे दण्ड्यतमो मतोऽयम् ।
वृत्तोऽहमस्मादभिषेणनेऽस्य
प्रयोजकोऽन्यो नहि मेऽत्र हेतुः ।। 50 ।।

चापद्वितीये मयि युध्यमाने
स्थातुं ममाग्रे न भवेदलं सः ।
एकैकशः कर्तयितास्मि तस्य
तीक्ष्णैर्दशास्यानि शरैरहं द्राक् ।। 51 ।।

किं वा बहूक्तेन मदीय एष
दृढोऽस्ति सङ्कल्प इति प्रजानन् ।
न मामतश्चालयितुं समर्थो
भवाञ्शिलौघं पवनो यथैव ।। 52 ।।

श्रुत्वादसीयं वचनं विषण्णो
लङ्कां दशास्यो न्यवृतद्विमूढः ।

इसलिए त्याग दो दुस्साहस, औ बन्धु साथ
फिर से वन में जाओ है केवल यही उचित ।
ज्ञानी जन जब भी करते इस भाँति कार्य
हो जाता है उनका विनाश तब सुनिश्चित ॥ ४८ ॥

उसके उस अप्रिय वाक्य जाल को सुनकर राम का
उद्विग्न हो उठा हृदय, किन्तु, वे शान्त सहज ।
उस छद्म तपस्वी से बोले समयानुसार
दशरथसुत श्री रामभद्र वे वचन सहज ॥ ४९ ॥

मेरी पत्नी का हरण किया दैत्याधम ने
इसलिए, कठोर दण्ड का पात्र यही निश्चय ।
इस कारण मैं आक्रमण करूंगा लंका पर
कोई न कदापि बदल पाये मेरा निश्चय ॥ ५० ॥

युद्ध में चाप ही होगा सखा हमारा जब
तब मेरे सम्मुख न ठहर पायेगा वह ।
अपने तीक्ष्ण शरों से दश सिर रावण के
एक-एक कर काटूँगा मैं । ५१ ॥

अथवा क्या लाभ अधिक कहने से यहाँ साधु !
ऐसा समझो यह मेरा दृढ़ संकल्प तथा ।
समझो, तुम मुझे न विचलित कर सकते ऐसे
विचलित कर पाता नहीं प्रभंजन शिला यथा ॥ ५२ ॥

इन वचनों को सुनकर रावण था अधिक खिन्न
चिन्तित मन मूढ़ तुरत लंका-प्रस्थान किया ।

सञ्चिन्तयामास च सोऽन्यमेवो-
पायं ततो रोद्धुमना अपायम् ।। 53 ।।

(मालिनीवृत्तम्)

यदि भवति विषादस्योदयो रामचित्ते
नहि कथमपि शक्तः स्यादयं सङ्गराय ।
इति धियमभिपन्नस्तत्परावर्तनार्थं
दशमुख इह गूढां युक्तिमेकां प्रपन्नः ।। 54 ।।

राम को हटाने के हितार्थ सोचता रहा
इसलिए, इस समय उसने अन्य उपाय किया ॥ ५३ ॥

होता है विषाद का उदय राम के चित्त में यदि
रण में समर्थ हो किसी भाँति होते न यहाँ ।
इस भाँति सोचकर उन्हें हटाने के हितार्थ
रावण ने गूढ़ युक्ति को निश्चित किया वहाँ ॥ ५४ ॥

# दशमः सर्गः

## (बेञ्जकय्युपाख्यानम्)

(इन्द्रवज्रावृत्तम् उपजातिवृत्तञ्च)

आसीत्पुरा बेञ्जकयीतिनाम्नी
क्रूराकृती राक्षसकन्यकैका ।
सा रावणोक्ता विदधे स्वरूप-
मभिन्नरूपं जनकात्मजायाः ।।1।।

मृतामिव स्वं परिदर्शयन्ती
तस्याः प्रवाहे स्वमवाहयत्सा ।
नद्या वगाहं[1] व्यतनिष्ट यस्यां
श्रीरामभद्रोऽनुदिनं प्रभाते ।।2।।

मायावशेनैव तया स्वरूपं
धृतं मृताया जनकात्मजायाः ।
येनावगाहार्थमुपागतः स-
न्नालोक्य तां मुह्यतु रामभद्रः ।।3।।

नष्टा प्रिया मे किमु जीवितेन
कार्यं ममेति प्रतिपन्नबुद्धिः ।
खिन्नान्तरात्मा विरमेत्स युद्धात्
प्राणांस्त्यजेद्वा वनमाश्रयेद्वा ।।4।।

1. वष्टि भागुरिरल्लोपमित्यनेनावगाहस्थाने वगाहशब्दः प्रयुक्तः ।

# दशम सर्ग

(बेझकप्युपाख्यान)

प्राचीनकाल में बेञ्जकयीनाम की एक
थी क्रूरस्वरूपा लंका में दानव कन्या।
रावण के कहने से उसने धर लिया रूप
लगती थी जैसे जनकराज की ही कन्या ॥ १ ॥

उसने सोचा निज को मृत सदृश दिखाती वह
सरिता-प्रवाह में बहती-सी दिख पड़े वहाँ।
जिसके तट पर प्रायः स्नान-ध्यान के हित
प्रतिदिन आया करते हैं वे श्रीराम जहाँ ॥ २ ॥

वह माया की शक्ति से धरेगी वही रूप
जिसमें वह दिखे सहज मृतवत् जानकी स्वयम्।
फिर, आयें जब राम वहाँ स्नान हेतु
होंगे मूर्छित सीता का शव देख भृशम् ॥ ३ ॥

होगा विश्वास—प्रिया, मेरी मर गई, अस्तु
मेरे जीवित रहने का है अब क्या आशय।
यह समझ सहज वे युद्ध विमुख होकर सहसा
प्राण ही तजेंगे या लेगें वन में आश्रय ॥ ४ ॥

इत्येव सञ्चिन्त्य सदा परेषां
प्रवञ्चनायां निपुणो दुरात्मा ।
दशाननो राक्षसकन्यकां तां
न्ययोजयत्कर्मणि तत्र घोरे ।।5।।

यथाऽनुमानं दनुजस्य तस्य
यदा ऽऽगतो दाशरथिर्विधातुम् ।
स्नानादिकं दैनिककृत्यजातं
तटे तटिन्याः समवालुलोके ।।6।।

मृतं शरीरं जनकात्मजाया
नदीप्रवाहेण समुह्यमानम् ।
तदा स संमोहमुपागतोऽभू-
दमुञ्चदश्रूणि च लुप्तधैर्यः ।।7।।

अन्वेषणायाथ चिरायमाणस्या-
र्यस्य सौमित्रिरुपागतस्तम् ।
दृष्ट्वा विषादाम्बुनिधौ निमग्नं
दुःखस्य कोटिं परमां जगाम ।।8।।

स्नानाय यातो न पुनर्निवृत्तः
श्रीराम इत्यस्तसमस्तकार्यौ ।
सम्प्रास्थिषातां शिबिरात्स्वकीयात्
सुग्रीवराजो हनुमांश्च वीरः ।।9।।

अन्वेषयन्तौ सुतरां सचिन्तौ
कूलङ्कषातीरमवापतुस्तौ ।

इस भाँति सोचकर सदा दूसरों को ठगने
में निपुण दुरात्मा लंकापति ने वही किया।
उस दानव कन्या को, इसलिए, तुरत उसने
उस पाप कर्म में था उसको सन्नद्ध ॥ ५ ॥

जैसा अनुमान किया रावण, ने, हुआ वही
जब आये प्रातः दशरथ सुत श्रीराम वहाँ।
स्नानादिक दैनिक कर्म आदि सम्पन्न हेतु
सरिता के तट पर देखा ऐसा दृश्य वहाँ ॥ ६ ॥

वह मृत शरीर उन जनकराज की कन्या का
सरिता-प्रवाह में वहाँ राम ने देखा जब।
उस समय हुआ संमोह अचेतन दिखे राम
आंखों से बहते अश्रु, धैर्य उनका विलुप्त ॥ ७ ॥

पश्चात्, लौटने में जब उनको हुई देर
खोजते हुए उन्हें तब लक्ष्मण आ गये वहाँ।
बन्धु को देख दुःख-सागर में निमग्न
लक्ष्मण को भी था हुआ क्लेश अत्यन्त वहाँ ॥ ८ ॥

श्रीराम गये स्नानादि हेतु लौटे न किन्तु
यह सोच, छोड़कर अन्य कार्यक्रम सहज वहीं।
अपने-अपने शिबिरों से निकले यथाशीघ्र
सुग्रीवराज, हनुमान् वीर चल पड़े वहीं ॥ ९ ॥

खोजते हुए वे दोनों चिन्ताकुल होकर
जा पहुंचे सरिता के तट पर शीघ्र जहाँ।

म्लानाननौ भ्रातृवरौ विलोक्य
दुःखं परं तावुपजग्मतुश्च ।। 10 ।।

विवेकशीलस्तु तयोर्हनूमान्
प्रत्यैन्न सीतामरणं कथञ्चित् ।
प्राणान्न जह्याज्जनकात्मजेति
दृढा मतिस्तस्य कपेर्बभूव ।। 11 ।।

कष्टं श्रिताऽपि स्वपते[1]र्वियुक्ता-
ऽप्येषा न जह्यात्पतिसङ्गमाशाम् ।
भूमेः सुता भूमिवदेव तस्या
धैर्यं भवेद्धैर्यधना मता सा ।। 12 ।।

न प्राकृतेव व्यवहारमेषा
समाश्रयेज्जातुचिदत्र लोके ।
न वृक्षशाखेव पतेत्प्रचण्डे
वायौ स्थिरा स्याद्गिरिशृङ्खलेव ।। 13 ।।

मायाविनामग्रसरा मदान्धाः
किं वाऽसुरा नैव विदध्युरेनः ।[2]
सीता प्रमीतेति[3] न सम्भवीति
दृढा मतिस्तत्र कपेर्बभूव ।। 14 ।।

मृतं शरीरं जनकात्मजाया
अन्यस्त्रिया वाऽसुरसम्भवायाः ।
एतत्परीक्षार्थमकालहीनं
चितां स सम्प्रज्वलयाम्बभूव ।। 15 ।।

1. पतिः समास एव (1.4.8.) इत्येनेन घिसञ्ज्ञायां गुणः । 2. एनः = पापम् । 3. प्रमीता = मृता

कपिप्रवीरैः पिशिताशनैश्च
वृत्तं यथावृत्तमभिप्रवक्तुम् ।।23।।

विदेहजाया वचनं तथा च
रामस्य सर्वे विबुधा अशृण्वन् ।
तेषां प्रमाणेन मलीवराजः
कृतागसं रावणमभ्युपागात् ।।24।।

शापं स तस्मै व्यसृजत्समन्युः
श्रीराघवेन्द्रास्त्रवधाभिसन्धिम् ।
विसृज्य शापं च सुरैः समेतो
यथागतं स प्रययौ स्वधाम ।।25।।

व्रीडावनम्रो दशकन्धरोऽपि
स्वचिन्तितार्थप्रतिकूलभावात् ।
विच्छायवक्त्रोऽर्क इवोपरक्त-
श्चिन्ताचिताध्वस्त इवाबभासे ।।26।।

(अनुष्टुब्वृत्तम्)

सर्वथाऽनिष्टचिन्तानां परदारापहारिणाम् ।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ।।27।।

दानव के साथ गये थे वानर लाने को
जो हुआ उसे कहना था सीता को भी वहाँ ॥ २३ ॥

वैदेही की सारी बातों के साथ-साथ
राम की बात भी देवों ने थी सुनी वहाँ।
उन बातों के प्रमाण से स्वयं विधाता भी
थे समझ गये रावण अपराधी सहज यहाँ ॥ २४ ॥

'राघव के बाणों से ही इसका वध होए'
ब्रह्मा ने रावण को था ऐसा शाप दिया।
देकर उसको यह शाप सभी देवों समेत
आये थे जैसे वैसे ही प्रस्थान किया ॥ २५ ॥

लज्जावश हुआ दशानन सहसा अधोमुखी
उसको अपने चिन्तन से था प्रतिकूल दिखा।
सूर्य के सदृश उस पर जैसे लग गया ग्रहण
चिन्ता की चिता मध्य वह जलता हुआ दिखा ॥ २६ ॥

जो सदा सोचते पर अनिष्ट
परदारा का अपहरण करें।
अभिप्राय न उनका हुआ सिद्ध
इसलिए जगत् भी रहा करे ॥ २७ ॥

# सप्तदशः सर्गः

(रावणात्मोपाख्यानम्)

(स्वागतावृत्तम्)

यत्नजातमभितः प्रविलोक्य
जेतुमाहवमृते रघुवंश्यम्।
निष्फलं दृढमतिं प्रविधाय
रावणः समरभूमिमुपेतः ॥1॥

तादृशः समभवत् किल घोरः
सङ्गरोऽतिभयदस्त्रिजगत्सु।
राघवेन्द्रदशकन्धरयोर्यो
न श्रुतो नहि च वा परिदृष्टः ॥2॥

तत्कुतूहलवशात्समुपेता
अद्भुतं तमवलोकयितुं द्राक्।
सिद्धयक्षमुनिपन्नगपूगा
देवता इतरभूतगणाश्च ॥3॥

शौर्यमत्र समरे रघुवंश्य-
स्यात्यरिच्यत न चापि दशास्यः।
पर्यहीयत मनागपि शस्त्रै
राघवस्य निशितैरपि धीरः ॥4॥

# सप्तदश सर्ग

## (रावणात्मोपाख्यान)

देखकर सकल असफल प्रयत्न
राम को जीतने को रण में ।
रावण आ पहुंचा समरभूमि
करके वह दृढ़ निश्चय मन में ॥ १ ॥

रण ऐसा हुआ भयंकर वह
राघव-रावण के मध्य वहीं ।
देखा अथवा जो सुना गया
त्रिभुवन में ऐसा युद्ध नहीं ॥ २ ॥

वह अद्भुत दृश्य देखने को
कौतूहलवश अतिशीघ्र वहाँ ।
मुनि-पन्नग-यक्ष-सिद्ध-सुरगण
अन्यान्य भूत आ गये वहाँ ॥ ३ ॥

शौर्य में राम रावण रण में
दिखते न परस्पर स्वल्प वहाँ ।
राघव के शस्त्रों के समक्ष
रावण न दिख रहा अल्प वहाँ ॥ ४ ॥

सत्यपीत्थमभवत्क्षतिरस्य
नैव, नैव च बभूव कथञ्चित् ।
अङ्गभङ्ग इति चित्रमिवासीत्
कारणस्य न च बोध इहासीत् ।।5।।

प्रस्नवद्गिरिणदीजलधारा-
वद् ववर्ष बलवच्छरधाराः ।
रावणे दशरथात्मजचापो
विव्यथे नहि च राक्षसराजः ।।6।।

कृत्तमङ्गमभवत् पुनरस्य
युक्तमित्यतिविचित्रमिवासीत् ।
तत्समीक्ष्य सकलस्थितिविद्वान्
रावणानुज उवाच सुविद्वान् ।।7।।

स्थापितोऽस्ति खलु पञ्जर आत्मा
रावणस्य दनुजप्रवरस्य ।
पञ्जरं लसति चास्य गुरोर्गो-
पुत्रसंज्ञकऋषेर्निलये भोः ।।8।।

यावदेष नहि हन्यत आर्य !
तावदस्य हननं सुशकं नो ।
आत्मनो यदि भवेद्धननं प्राग्
निश्चितं भवति तद्धननं भोः ।।9।।

तां निशम्य तु विभीषणवाच-
मुद्यतः कपिरभूद्धनुमान् द्राक् ।

रावण न तनिक क्षत-विक्षत था
वह अंग-भंग भी हुआ नहीं।
इस विचित्रता का कारण तो
समझा था कोई वहाँ नहीं ॥ ५ ॥

गिरि-सरिता जलधारा समान
राम के बाण बरसते वहीं।
पर, रावण के ऊपर उनका
कुछ दुष्प्रभाव पड़ सका नहीं ॥ ६ ॥

कटता जो अंग पुनः जुड़ता
ऐसी यह बात विचित्र हुई।
देखकर विभीषण ने इसको
जानंता स्वयं वह बात कही ॥ ७ ॥

'आत्मा दशानन दानव की
पंजर के अन्दर पड़ी हुई।
पंजर उसके गुरु के समीप
मुनि गोपुत्रक के भवन रही ॥ ८ ॥

जब तक न वधेगें उसे आर्य !
रावण मर सकता कभी नहीं।
यदि पहले वधे आत्मा को
तो निश्चित ही यह मरे यहीं ॥ ९ ॥

सुन वचन विभीषण के तत्क्षण
हनुमान् सहज तैयार हुए।

आत्मनो हननमस्य विधातु-
माश्रमे ऋषिवरस्य च यातुम् ।। 10 ।।

रामभद्रमयमाह तरस्वी
कार्यमेतदहमस्मि विधाता ।
शीघ्रमेव भविता तव चिन्ता
मत्प्रयत्नवशतो व्यपयाता ।। 11 ।।

युक्तिमाश्रितवता मयका भो-
याश्रितो भवति चेच्छलमार्गः ।
नाहमस्मि भवता परिदृश्यः
संशयेन मनसाऽपि कदापि ।। 12 ।।

एवमस्त्विति महात्मनि रामे
प्रोक्तवत्यथ कपिर्द्रुतगत्या ।
अङ्गदेन सहितः प्रययौ गो-
पुत्रसञ्ज्ञकऋषेर्वरधाम ।। 13 ।।

प्राप्य चैनदयमाह ऋषिं तं
मान्य ! तेऽस्मि शरणं प्रतिपन्नः ।
रामनामकजनं परिचर्य
नांशतोऽपि फलमस्त्यृषिवर्य ।। 14 ।।

तेन मान्यवर ! विप्रकृतोऽस्मि
धिक्कृतोऽस्मि बहु चापकृतोऽस्मि ।
न क्षणं क्षणमपि प्रतिपन्न-
स्त्वां शरण्यमहमस्म्युपपन्नः ।। 15 ।।

उसकी आत्मा के वध-हितार्थ
ऋषि आश्रम जाने वाले वे ॥ १० ॥

राम से उद्यमी बोला वह
'यह कार्य करूँगा स्वयं आर्य !
मेरे प्रयास से यथाशीघ्र
तव चिन्ता होगी दूर आर्य !' ॥ ११ ॥

'ऐसा ही हो' राम ने कहा
तब कपि द्रुतगति से चला वहाँ।
गोपुत्र मुनीश्वर के आश्रम
अंगद के संग कपि गया वहाँ ॥ १२ ॥

युक्ति का आश्रय लेकर मैं
यदि छल से कार्य बनाऊँ भी।
तो आर्य न करें तनिक संशय
अपने मन में हे प्रभो ! कभी ॥ १३ ॥

ऋषि के समक्ष जाकर बोला—
'आपकी शरण में मैं मुनिवर।
राम की की परिचर्या, पर
कुछ भी फल नहीं मिला ऋषिवर !' ॥ १४ ॥

हे मुने ! मुझे आघात लगा
मैं हुआ व्यर्थ धोखा खाया।
क्षण भर न मिली कुछ शान्ति, अस्तु
आपकी शरण में मैं आया ॥ १५ ॥

न कृतघ्नसविधे वसतिर्मे
रोचतेऽति सरलो मनसाऽस्मि ।
यो निजाश्रितजने नहि साधु-
स्त्याग एव खलु तस्य तु साधुः ।। 16 ।।

रावणं मनसि सेवितुमिच्छा
प्रोद्यता मम ततोऽहमुपेतः ।
अङ्गदेन सह तन्नय मां तं
साधु स व्यवहरेन्मयि साधुः ।। 17 ।।

आश्रितं स सुतरां गुणगृह्यो
मामवश्यमवितेति मतिर्मे ।
पादपङ्कजरजोऽस्य मम स्या-
दङ्गराग इति मे हृदि रागः ।। 18 ।।

तं भवान् सपदि पूरयतामि-
त्यर्थना मम भवत्यृषिवर्ये ।
अर्थिनं खलु विदध्युरुदार-
बुद्धयो जगति नैव निराशम् ।। 19 ।।

तद् भवान्नयतु मामतिशीघ्रं
रावणं भवतु येन शुभं मे ।
तादृशस्य गुणगृह्यजनस्य
सेवय. सुकृतिनोऽद्य कृती स्याम् ।। 20 ।।

पुण्यवानसि कपे हनुमंस्त्वं
यस्य तावदुदिता शुभबुद्धिः ।

हूँ सरलहृदय, अच्छा न लगे
मुझ को कृतघ्न के निकट वास ।
जो निज आश्रित का ध्यान न दे
उत्तम है उस साधु का त्याग ॥ १६ ॥

मन में रावण की सेना की
इच्छा लेकर आ गया यहाँ ।
रावण है साधु, अस्तु मुझको
अंगद के संग ले चले वहाँ ॥ १७ ॥

आश्रित का गुण-ग्राहक रावण
मैं वहाँ सुरक्षित भाव यही ।
उसके पदपंकज के रज से
मेरे उर में अनुराग यही ॥ १८ ॥

शीघ्र ही आप पूरी कर दें
मेरी साधना यही मुनिवर !
जो हैं उदारमति जग में वे,
दिखलाते कृपा याचकों पर ॥ १९ ॥

इसलिए, ले चलें वहाँ शीघ्र
रावण मेरा कल्याण करें ।
ऐसे गुण-ग्राहक की सेवा
करके हम जीवन सफल करें ॥ २० ॥

'तुम पुण्यवान हो कपि हनुमत् !
जागी है शुभमति तेरी अब ।

सेवया दनुजराजवरस्य
जीवितं सफलमातनु वीर ! ।।21।।

चीवरावृततनुर्वनवासी
राज्यतो विरहितः क्व नु रामः ।
वैभवावृततनुः क्व च रे ! दिक्-
चक्रवालविजयी दशकण्ठः ।।22।।

नाममात्रमपि यस्य रिपूणां
मानसं वितनुते भयकम्प्रम् ।
सोऽखिलस्य भुवनस्य विजेता
रावणोऽस्ति यशसां भुवि चेता ।।23।।

कर्मणा च मनसाऽथ च वाचा
रावणं परिचरेर्नियमेन ।
त्वं यदि त्वयि भवेद्धनुमन् ! सो-
ऽवश्यमेव हृदयेन कृपालुः ।।24।।

सेवितोद्यप्रभृति[1] त्वयकाऽसौ
यौवनेऽपि मुनिवेषधरो रे ।
रामचन्द्र इति कीर्तितनामा
ऽकिञ्चनो जगति किञ्चनबुद्धिः ।।25।।

रावणं परिचर त्वमनन्त-
वीर्यमन्तरमवेहि च तात ।
रत्नराशिपरिपूर्णमवश्यं
त्वां विधास्यति स लोकसुरत्नम् ।।26।।

1. 'हे प्रे वा' इत्याश्रित्य प्रयोगः ।

उस दनुजराज की सेवा से
जीवन हो सफल तुम्हारा अब ॥ २१ ॥

हैं कहाँ राम वल्कलधारी
राज्य रहित वनवासी वह ?
वैभव सम्पन्न कहाँ रावण
दिग्विजयी जग का स्वामी वह ॥ २२ ॥

जिसका सुन करके नाम मात्र
रिपु के मन में भय लगे सहज ।
वह अखिल विश्व का विजयी है
यश उसका भू पर भरा सहज ॥ २३ ॥

यदि तुम मन-वचन-कर्म द्वारा
उसकी सेवा करते हो तुम ।
यदि होगा तुम में यही भाव
तो पाओ उसकी करुणा तुम ॥ २४ ॥

आज तक जिसकी सेवा की
वह रामचन्द्र तो बुद्धिहीन ।
यौवन में भी मुनिवेष धरे
दिख रहे जगत् में दीन हीन ॥ २५ ॥

रावण अनन्त बलवीर्यवान्
तुम उसकी सेवा करो तात !
तुम रत्नराशि से पूर्ण सदा
बन जाओगे फिर वहाँ तात ॥ २६ ॥

माननामयमवैति विधातु-
मात्मनीननिजभक्तजनस्य ।
रामतस्त्वधिगतो ह्यवमानः
साम्प्रतं भवतु ते बहुमानः ।।27।।

गच्छ तावदधुना हनुमंस्त्वं
रावणं च समुपेहि शरण्यम् ।
सत्यमेव स्वपदाम्बुजयुग्म-
सेवया सफलयिष्यति स त्वाम् ।।28।।

एवमुक्तवति वाचमुदारां
रावणस्य दनुजस्य गुरौ सः ।
वाचमेवमनिलस्य तनूजो
वक्तुमेनमुपचक्रम आशु ।।29।।

यत्त्वमात्थ ऋषिवर्य तथैव
कामये तु दशकण्ठमुपैतुम् ।
आगतोऽयमरिपक्षत एवं
यद्ययं तु विपरीतमतिः स्यात् ।।30।।

नाभ्युपैष्यति कदाचिदपि प्राक्-
स्वाहिताचरणवृत्तिमयं माम् ।
दृष्टिरेव मम मन्युवशं तं
संनयेदिति भयं मम तात ।।31।।

नैव दर्शनमपि प्रसहेत
क्रोधवह्निविदहद्धृदयेन ।

निज भक्तों के कल्याण हेतु
रावण रखता है सदा ध्यान।
राम से मिला अपमान तुम्हें
अब मिले तुम्हें सम्मान-मान ॥ २७ ॥

जाओ हनुमत्! तुम इसी समय
दशकंठ शरण में यथाशीघ्र।
सत्यत: पाद पंकज सेवा
जीवन कर देगी सफल शीघ्र।' ॥ २८ ॥

रावण के गुरु के कहने पर
ऐसी उदारवाणी उस क्षण।
वायु के पुत्र ने इस प्रकार
कह दिया मुनीश्वर से तत्क्षण ॥ २९ ॥

'आपने कहा जैसा मुनिवर!
चाहता दशानन निकट गमन।
शत्रु के पक्ष से आने पर
उसकी गति में हो परिवर्तन ॥ ३० ॥

मेरा पूर्व का आचरण समझ
देगा न शरण ऐसा निश्चय।
देखकर मुझे वह बने, कुपित
इस समय मुझे यों लगता भय ॥ ३१ ॥

क्रोध से दग्ध है हृदय, अस्तु
मेरा दर्शन सह सके न वह।

यावदेष विनिवेद्यत एव
तावदेव स तु मां प्रणिहन्यात् ।।32।।

अङ्गदं च सकृदेव स खड्ग-
पातनेन मम पुत्रसमानम् ।
वज्रपात इव खड्गनिपातः
खण्डशः प्रविदधीत ऋषे ! तम् ।।33।।

बुद्धिमानपि विवेकयुतोऽपि
शास्त्रशीलनपरोऽपि बुधोऽपि ।
क्रोधमार्गमभितः प्रतिपन्नो
नो विचिन्तयति कार्यमकार्यम् ।।34।।

एवमेव यदि तात! घटेत
यादृशी भवति मे हृदि शङ्का ।
तन्महान्तमनुतापमनर्थं
विप्लवं च तनुयादनभीष्टम् ।।35।।

तस्य वारणमभीष्टतमं न-
स्तत्र नो हितमथो निहितं नः ।
तत् सहैव भवता गमनं मे
रोचते भवदभीष्टमिदं चेत् ।।36।।

एवमस्त्विति ऋषौ निजवाचं
प्रोक्तवत्यथ कपिः सह तेन ।
अङ्गदेन च सहोद्युयुजे द्राग्
रावणोपगमनाय हितेन ।।37।।

जब तक हो नम्र निवेदन मम
तब तक वध देगा मुझको वह ॥ ३२ ॥

अंगद है मेरा पुत्र-तुल्य
उस पर वह खड्ग चलायेगा।
जो वज्रपात सम है उससे
वह खण्ड-खण्ड हो जायेगा ॥ ३३ ॥

जो है विवेकयुत बुद्धिमान
ज्ञानी अथवा शास्त्रज्ञ अधिक।
क्रोध सहज हो जाने पर
सोचता न कार्य-अकार्य तनिक ॥ ३४ ॥

यदि ऐसा ही हो गया तात !
मन में जो शंका उठी सहज।
हो तात-अनर्थ-विप्लव महान्
होगा अनिष्ट का योग सहज ॥ ३५ ॥

उसका वारण भी है अभीष्ट
अन्यथा न हित हो सके वहाँ।
इसलिए, साथ ही चलें आप
तो हो अभीष्ट की सिद्धि वहाँ ॥ ३६ ॥

'ऐसा ही हो कहकर मुनिवर
कपि के संग ही तैयार हुए।
अंगद को साथ तुरत लेकर
लंका-गमनार्थ विचार किये ॥ ३७ ॥

आह चापि गमनात्प्रथमं गो-
पुत्रसंज्ञकमृषिं कपिवीरः ।
पञ्जरं नय ऋषे! सममेव
मा स्म चूचुरदिदं रघुवंश्यः ।। 38 ।।

पञ्जरेऽत्र निहितोऽस्ति पुलस्त्य-
नन्दनस्य भुवि नन्दित आत्मा ।
रक्षणेऽस्य सुतरां प्रविधेयो
यत्न इत्यवहितः शृणु मां त्वम् ।। 39 ।।

आश्रमादपगतं तपआढ्यं
त्वां विलोक्य कपटी रघुवंश्यः ।
हारयेत्स्वयमिदं तु हरेद् वा
वेद कः कपटिनां खलु वृत्तम् ।। 40 ।।

तत्सहैव नय पञ्जरमेतन्
मा स्म शत्रुकर एतदुपागात् ।
अन्यथा महदनिष्टमृषे! नः
सम्भवेदिति वचो मम विद्धि ।। 41 ।।

शुद्धहृच्च सरलश्च प्रकृत्या
ऽबुद्ध नो कपिहृदि ह्यभवद्यत् ।
अभ्युपेत्य च वचः खलु तस्य
पञ्जरं समनयत्स सहैव ।। 42 ।।

यावदेष पवनस्य सुतेन
चाङ्गदेन च सहाप तु लङ्काम् ।

ऋषि के चलने के पूर्व वहाँ
हनुमत ने भी यह बात कही।
'पंजर ले चले साथ मुनिवर
राघव ने चुरा ले उसे कहीं ॥ ३८ ॥

पंजर में निहित दशानन की
आत्मा, लोक में जिसका यश।
उसकी रक्षा अनिवार्य तात !
सुन ले यह मेरी बात सहज ॥ ३९ ॥

हैं तपोनिष्ठ आश्रम सूना
लखकर कपटी वे राम सहज।
इसका अपहरण करा लेंगे
जानता कौन धूर्त का चरित ॥ ४० ॥

तो पंजर भी ले चलें साथ
अन्यथा गया यह शत्रु-हाथ।
जिससे होगा महान् अनिष्ट
समझें मेरी यह बात तात ॥ ४१ ॥

ऋषि शुद्ध हृदय थे सरल प्रकृति
नहिं समझ सके कपि-हृदय बात।
आ गये उसी की बातों में
पंजर भी था ले लिया साथ ॥ ४२ ॥

जैसे ही हनुमत् संग तथा
लंका आये अंगद समेत।

तावदापतितवत्यतिघोरा
ऽचिन्तिता च विषमा च समस्या ।।43।।

क्राम्यते ऋषिवरेण तु सीमा
रावणस्य नगरस्य यदि द्राक् ।
पञ्जराद्बहिरुपेत्य तदात्मा
तं द्रवेत तमनुप्रविशेच्च ।।44।।

तेन चास्य हननं सुशकं स्या
न्नाभवच्च समभीष्टमृषेस्तत् ।
किं नु कार्यमधुनेति स चिन्तां
मानसार्तिकरणीं प्रतिपेदे ।।45।।

चिन्तयन् बहु च तत्र स तूष्णीं
तस्थिवान् नहि ततो ययिवांश्च ।
तादृशं समवलोक्य कपिस्तं
सादरं गिरमिमां प्रतिपेदे ।।46।।

केयमस्ति ऋषिवर्य ! तवार्तिः
सेवकौ तव समीप इहावाम् ।
ब्रूहि तन्मनसि या तव चिन्ता
मा स्म भो ! व्यथितमानस आस्स्व ।।47।।

तावृषिः सकलमाह तदास्त
मानसे विकलताजनकं यत् ।
तन्निशम्य पवनात्मज एन-
मूर्जितं वच उवाच विपश्चित् ।।48।।

वैसे ही थी आ पड़ी घोर
वह विषम-समस्या भी अचेत ॥ ४३ ॥

यदि मुनिवर भी शीघ्रातिशीघ्र
लंका की सीमा पर करें।
पंजर से निकल आत्मा वह
रावण में तभी प्रवेश करें ॥ ४४ ॥

जिससे उसका वध निश्चित है
ऋषि का अभीष्ट यह कभी नहीं।
क्या करें यही चिन्ता उनके
मानस को करती दुःखी रही ॥ ४५ ॥

सोचते-सोचते हुए शान्त
थे खड़े न आगे बढ़े वहीं।
कपि उन्हें देखकर इसी भाँति
सादर उनसे यह बात कही ॥ ४६ ॥

क्या है ऋषिवर ! आपका कष्ट
हम सेवक है तव निकट यहाँ।
जो चिन्ता है कह दें हमसे
इस भाँति व्यथित मत बने यहाँ ॥ ४७ ॥

ऋषि ने उनसे सब बात कही
अपने मानस की व्याकुलता।
यह सुनकर बोले पवन-पुत्र
उत्साहपूर्ण निज तत्परता ॥ ४८ ॥

नैव किञ्चिदिव चिन्त्यमिहास्ति
मा स्म चिन्तनकृते स्वमनो दाः ।
अङ्गदोऽत्र खलु तिष्ठतु सीम्नि
त्वत्समं गमनमस्तु ममैव ।। 49 ।।

अङ्गदस्य यदि तिष्ठति हस्ते
पञ्जरं नहि समुत्प्लवनं स्यात् ।
आत्मनस्तदिह तिष्ठतु सोऽत्र
द्वावुभावपि दशास्यमुपेवः ।। 50 ।।

एवमस्त्विति ऋषावुपपन्ने
पञ्जरं व्यलसदङ्गदहस्ते ।
द्वावृषिश्च हनुमांश् च तदानीं
जग्मतुर्दशमुखस्य पुरीं तौ ।। 51 ।।

(अनुष्टुब्वृत्तम् )

यावदध्वाऽभवत्कश्चिदतिक्रान्तस्तदाऽवदत् ।
ऋषिं गोपुत्रनामानं रावणस्य गुरुं कपिः ।। 52 ।।

किञ्चिदावश्यकमृषे ! सन्देष्टव्योऽङ्गदो मया ।
क्षणमात्रं भवानत्र तिष्ठत्वायामि शीघ्रतः ।। 53 ।।

ओमित्युक्तेऽथ ऋषिणा वायुवेगेन निर्ययौ ।
वायोः सुतः क्षणेनैव चाङ्गदं प्राप चाह च ।। 54 ।।

देहि मे पञ्जरं तात ! तत्करिष्येऽत्र येन नः ।
सेत्स्यन्ति सकला एव चिन्तितार्था असंशयम् ।। 55 ।।

'कुछ भी चिन्ता की बात नहीं
ऐसा चिन्तन मन में करें।
अंगद सीमा पर रहें यहीं
बस आप हमारे साथ चलें ॥ ४९ ॥

यदि अंगद पञ्जर लियें रहें
तो जा सकती आत्मा नहीं।
वह आत्मा के संग यहाँ रुके
हम चलें दशानन-निकट वहीं ॥ ५० ॥

'ऐसा हो' कहकर मुनिवर ने
पंजर अंगद को थमा दिया।
हनुमान और ऋषि उसी समय
दशमुख के पास पयान किया ॥ ५१ ॥

जैसे ही वे कुछ दूर गये ऋषि और कपीश्वर साथ-साथ।
तब तक हनुमत ने मुनिवर से सहसा रुककर यह कही बात ॥ ५२ ॥

कुछ है सन्देश कि आवश्यक अंगद से कहना मुझे शीघ्र।
क्षण भर रुक जायें यहाँ आप मैं भी आता हूं यथाशीघ्र ॥ ५३ ॥

'ठीक है' कहा ऋषिवर ने जब कपि वायुवेग से गया वहाँ।
जाकर हनुमत् ने अंगद से उस समय कहा इस भाँति वहाँ ॥ ५४ ॥

'दे दो पंजर अब मुझे तात ! मैं वही करूंगा जिससे ही।
हो सकें मनोरथ पूर्ण सकल जिसकी चिन्ता निःसंशय ही ॥ ५५ ॥

पञ्जरं तत आदाय रावणात्मानमेव च ।
तत्स्थाने नूतनं कृत्वा तत्र स्थापितवान् कपिः ।।56।।

अङ्गदो मूलमात्मानं हनूमत्सम्प्रचोदितः ।
समुद्रतीरे न्यखनद्येन नाविर्भवेदयम् ।।57।।

अङ्गदेन दृढं तावन्निखाते रावणात्मनि ।
असम्भवत्वे तद्योगे रावणेन कथञ्चन ।।58।।

रावणो वध्यकोटित्वं जगाम परमास्त्रवित् ।
अहन्यत च तीक्ष्णाग्रैः शरै रामाभिवर्षितैः ।।59।।

दशग्रीववधे तावद्धनूमान् युक्तिमास्थितः ।
श्रीरामस्य परो भक्तो निमित्तत्वं समाययौ ।।60।।

स्वामिनो हितसिध्द्यर्थं तदेकाग्रेण चेतसा ।
प्राणानपि प्रियान् सत्यं पणीकुर्वन्ति सेवकाः ।।61।।

'न विश्वसेदविश्वस्तं विश्वस्तेऽपि न विश्वसेत्' ।
थाइरामायणीयेदं सत्यापयति सत्कथा ।।62।।

प्रकृत्या सरलोऽत्यन्तं विश्वासं समुपेयिवान् ।
गोपुत्रो वायुतनये तेनाभूदतिसंहितः ।।63।।

निमित्तं च बभूवासौ विनाशेऽतिप्रतापिनः ।
प्रियस्य स्वस्य शिष्यस्य शत्रौ प्रत्ययमीयिवान् ।।64।।

पंजर हनुमत् ने लिया तुरत रावण की आत्मा बसी जहाँ।
आत्मा नवीन बना कपि ने उसमें की स्थापिता वहाँ ॥ ५६ ॥

कपि के कहने से अंगद ने मूलात्मा पंजर से लेकर।
खोदकर एक गड्ढा उसको था गाड़ दिया सागर तट पर ॥ ५७ ॥

अंगद ने दृढ़ता से रावण की आत्मा को गर्त में गाड़ दिया।
रावण से मिलन आत्मा का हो गया असंभव सहज वहाँ ॥ ५८ ॥

रावण था यद्यपि महावीर वध की कोटि में आ गया सहज।
राम के तीक्ष्ण वाणों से वह मृत्यु को प्राप्त हो गया सहज ॥ ५९ ॥

रावण के वध हित हनूमान् ने युक्ति बनाई जो विचित्र।
उससे श्रीरामभक्त ने यों कर लिया सिद्ध वैसा निमित्त ॥ ६० ॥

स्वामी के हित की सिद्धि हेतु एकाग्रचित्त से करें वही।
अपने प्रिय प्राण निछावर कर सेवक करते ही कार्य सही ॥ ६१ ॥

विश्वास अविश्वासी पर क्या विश्वासी पर विश्वास नहीं।
यह बात 'थाइ रामायण'की यह कथा प्रमाणित करे यहीं ॥ ६२ ॥

जो था अति सरल स्वभाव सहज उसने विश्वास किया सहसा।
वायु के पुत्र से गोपुत्रक के साथ हुआ इससे ऐसा ॥ ६३ ॥

शत्रु का किया विश्वास, अस्तु ऋषि बने विनाश के हेतु सहित।
जो परम शिष्य प्रिय था उनका उसका उनसे हो गया अहित ॥ ६४ ॥

## अष्टादशः सर्गः

### (महीपालदेवासुरोपाख्यानम् )

(भुजङ्गप्रयातवृत्तम् )

दशास्ये गते राक्षसे मृत्युलोकं
सहायैः सह स्वां निवृत्ते च रामे ।
पुरीं, सर्ववृत्तानभिज्ञः समागा-
न्महीपालदेवः पुरीं नाम लङ्काम् ।।1।।

सखाऽभूद्दशास्यस्य सोऽतिप्रतापी
प्रशास्ता भुवश्चक्रवालाभिधायाः ।
चिरायास्ति दृष्टो मया नो सुहृत्तन्
मया सोऽभ्युपेतव्य एवेति बुद्धिम् ।।2।।

समास्थाय सोऽभ्यागमत्तत्र लङ्कां
समागम्य यावच्च वृत्तं विषण्णः ।
विवेदाखिलेनाभवत्तावदेव
स्फुरत्कोपवह्निप्रदग्धान्तरङ्गः ।।3।।

हतो मे सखा राघवेणानुजस्य
दशास्यस्य साह्येन लोकाधिपोऽपि ।
अतस्तस्य मृत्योः प्रतीशोधमद्य
विधास्याम्यहं तस्य बन्धुः प्रियोऽहम् ।।4।।

# अष्टादश सर्ग

## (महीपाल देवासुरोपाख्यान)

दानवपति रावण के मरने के बाद तथा
जब राम अयोध्या लौट गये साथियों सहित ।
महिपाल देव नामक जा पहुँचा लंका में
जो सारी घटनाओं से रहा नहीं परिचित ॥ १ ॥

वह सखा दशानन का अत्यन्त प्रतापी था
जो चक्रवाल नामक प्रदेश का शासक था ।
जब बहुत समय से नहीं मित्र से मिले, अस्तु
अब जायें उसके पास इसे ही सोचा था ॥ २ ॥

ऐसा विचार कर वह आया जब लंका में
तब आते ही दुःख का सारा वृत्तान्त सुना ।
सुनते ही अखिल कष्टकारक दुःसमाचार
उसका कोपानल ज्वलित हो उठा कई गुना ॥ ३ ॥

वह सखा राम के द्वारा मेरा वधा गया
उस लोकेश्वर का अनुज सहायक था वध में ।
प्रतिशोध, अस्तु, उसकी हत्या के लिए मुझे
करना होगा, हम बंधु परमप्रिय हैं उसके ॥ ४ ॥

सुहृत्त्वं निहत्यानुजं तस्य लोके
स्वकं ख्यापयिष्याम्यहं दुष्टबुद्धिम् ।
निजभ्रातृराज्यं स्वकीयं वितन्व-
न्नसौ स्वार्थकामो वधार्हो मतो मे ।।5।।

विचिन्त्यैवमेषोऽरुणत्क्रूरकर्मा
सुगुप्तां सुवीरैः पुरीं नाम लङ्काम् ।
दशास्यानुजः शासकोऽस्या विपन्न-
स्तदानीन्तनो घोरचिन्तां प्रपन्नः ।।6।।

दशग्रीवपूर्वं तदा राज्यकाले
नवं नाम तस्यांशपश्चाद् बभूव[1] ।
नृपाः स्वाभिषेकस्य काले नवीना-
मभिख्यां दधुः सैव रीतिस्तदाऽभूत् ।।7।।

न शक्तिश्च नो तस्य सामर्थ्यमास्तां
यथा रावणस्येति तस्यान्तरङ्गे ।
महान् व्याकुलीभाव आविर्बभूव
विचारप्रवाहस्तथा सन्ततश्च ।।8।।

क्रियेताधुना किं मयाऽत्रेति चिन्ता-
परोऽसौ क्षणान् यापयामास नैकान् ।
अकस्मात्स्मृतिस्तस्य चित्तेऽतिविग्ने
जजागार वाक्यस्य रामोदितस्य ।।9।।

विजित्याभवत्संनिवृत्सुः स लङ्कां
यदा राघवेन्द्रस्तदा सोऽभ्युवाच ।

1. दशग्रीवांश इति ।

उस दुष्ट विभीषण का वध करके लोक मध्य
फैलाऊंगा मैं अपनी कीर्ति इस समय जहाँ।
अपने भाई का राज्य हड़पने वाला वह
है परमस्वार्थी वध का पात्र बने यहाँ ॥ ५ ॥

सोचकर यही महीपाल क्रूर कर्मा अपने
विक्रमी वीर लेकर लंका को घेर लिया।
शासक रावण का अनुज पड़ गया विपदा में
इस समय घोर चिन्ता ने उसको ग्रस्त किया ॥ ६ ॥

राज्यारोहण के समय नाम उसका नवीन
यह दशग्रीवांश नाम से सहज प्रसिद्ध हुआ।
अभिषेक समय राजा का होवे नया नाम
थी रीति यही, इसलिए, यही था नाम हुआ ॥ ७ ॥

उसमें रावण के सदृश शक्ति तो रही नहीं
उस जैसी ही सामर्थ्य न उसमें रही कहीं।
इसलिए, बढ़ गयी थी उसकी आकुलता भी
उसके चिन्तन का दिखता कोई छोर नहीं ॥ ८ ॥

'इस समय करूँ क्या ऐसी' व्याप गयी चिन्ता
सोचते-सोचते कुछ क्षण उसने बिता दिये।
उद्विग्न चित्त में उसके जाग उठी स्मृति
राम के वाक्य सहसा उसको थे याद हुए ॥ ९ ॥

लंका पर विजय प्राप्त करने के बाद स्वयं
भगवान राम ने उससे था इस भाँति कहा।

दशास्यानुजं तस्य सामर्थ्यमूनं
विभाव्यापदो रक्षितुं तं सहायम् ।। 10 ।।

सुहृद्वर्य यद्यापतेरापदस्त्वं
वशे तत्प्रवृत्तिं त्वया सूचनीयः ।
अहं तेन तादृग्व्यवस्थां करिष्ये
यथा स्याद्विमोक्षस्तवापद्गतस्य ।। 11 ।

अहःसप्तके सप्तके ऽद्य प्रभृत्य-
तितीव्रं प्रहेतास्म्यहं बाणमेकम् ।
यदि त्वं भवेरापदा ग्रस्त आशु
तदा लेखमेनेन सम्प्रेषयस्व ।। 12 ।।

गिरो रामभद्रोदितायाः पुराऽसौ
स्मरन् भ्रातृवर्यो दशास्यस्य भीतः ।
शरे लेखमेकं निबध्यासृजत्तं
स शीघ्रं रघूणां पतिं चाससाद ।। 13 ।।

विपद्वारिराशौ निमग्नं विदित्वा
सहायं पुराणं स्वकीयं सुदुःख्यन् ।
हनूमत्समाख्यं निजानन्यभक्तं
स भक्तानुरक्तः प्रभुः सन्दिदेश ।। 14 ।।

हनूमन् ! स पूर्वः सहायः प्रियो नो
निमग्नोऽस्ति घोरापदायामकस्मात् ।
दशास्यस्य मित्रेण तद्राजधानी
निरुद्धा महीपालदेवासुरेण ।। 15 ।।

जानकर विभीषण की सामर्थ्य न्यून उस क्षण
विपदा में रक्षा हेतु उन्होंने यही कहा ॥ १० ॥

हे मित्र ! यदि कभी तुम पर विपदा आये तो
तत्काल सूचना उसकी देना मुझे सखे !
जिससे कर दूंगा वही व्यवस्था तत्क्षण मैं
हो जाये विपदा से विमुक्ति जिस भाँति सखे ॥ ११ ॥

आज से तथा आगे भी प्रति सप्ताह एक
अति तीव्र वाण मैं सदा चलाता रहूँ यहाँ ।
यदि पड़े आपदा तुम पर तो तत्काल मित्र !
वाण सहित तुम पत्र भेजना शीघ्र वहाँ ॥ १२ ॥

जो बात कही थी राघव ने उससे पहले
भयभीत दशानन भ्राता ने था याद किया ।
वाण में बाँध कर पत्र एक तत्क्षण उसने
श्री रामभद्र के पास उसे था भेज दिया ॥ १३ ॥

उसको विपत्ति सागर में डूबा हुआ समझ
अपनी पहली सहायता, दुःख भी याद किया ।
राघव ने अपने भक्त हनूमत् को बुलवाया
फिर प्रभु ने उसको ऐसा था आदेश दिया ॥ १४ ॥

हे हनुमत् ! मेरा मित्र सहायक पहले का
इस समय घोर विपदा में है पड़ा हुआ ।
दशमुख के मित्र महिपाल देव ने तो
है लंका को सभी ओर से घेर लिया ॥ १५ ॥

ततो याहि लङ्कां विहायान्यचिन्तां
सहायं स्वकं मोचयस्वापदश्च ।
विपन्नस्य तावत्सहायस्य साह्य-
मवश्यं विधेयं सता मानवेन ।।16।।

इमं रामभद्रस्य सन्देशमाप्य
हनूमान् नवं फ्यानुजं नाम बिभ्रत् ।
नृपालो नंवाभिख्यपुर्या इदानीं
पुरीं रावणभ्रातुराशु प्रतस्थे ।।17।।

अनल्पेन कालेन चैनामवाप्य
प्रवीरो महीपालदेवासुरं सः ।
नियुद्धाय सज्जो भवेत्याह्वतैनं
समाचष्ट तावत् तवान्तोऽस्मि चेति ।।18।।

समाकर्ण्य तच्छ्रोत्रशूलं वचोऽस्य
नदन् सिंहनादं प्रकोपारुणाक्षः ।
तमभ्यद्रवद्वायुवेगेन वायोः
सुतं सङ्गतोऽभूच्च तेन क्षणेन ।।19।।

नियुद्धाय सम्प्रार्थिता वीरवर्याः
स्वमानैकसंरक्षणासक्तचित्ताः ।
निजां शक्तिमेवाकलय्य स्वशस्त्रं
झटित्येव शत्रोः पुरस्ताद् भवन्ति ।।20।।

समालोक्य वीरं कपिं सम्मुखे स
तृणायैव तं मन्यमानो बभाषे ।

इसलिए, छोड़कर अन्य कार्यों की चिन्ता
लंका जाओ और दूर करो मित्र की विपदा।
सज्जन अवश्य करते सहायता हैं उनकी
जिनके ऊपर आ पड़ती है सहसा विपदा ॥ १६ ॥

पाकर सन्देश राम का हनुमत् महावीर
जो 'फ्यानुज' कहलाते थे नाम प्रसिद्ध वहाँ।
'नव' नामक पुरी इस समय जिसके राजा वह
रावण के भ्राता की रक्षा हित चले वहाँ ॥ १७ ॥

वह महावीर भी अल्पकाल में जा पहुँचे
ललकार दिया उस महीपालदेव को वहाँ।
'हो जाओ अब तैयार द्वन्द्व के हेतु तुरत
आ गया काल बनाकर मैं तेरे पास यहाँ' ॥ १८ ॥

हनुमत् की शूल सदृश वाणी को सुनते ही
क्रोध से लाल नेत्रों से करता सिंहनाद।
वह वायुवेग से दौड़ पड़ा हनुमान् निकट
उस समय छिड़ गया दोनों में द्वन्द्व का विवाद ॥ १९ ॥

द्वन्द्व हेतु ललकार रहे वे महावीर
निज स्वाभिमान की रक्षा में संलग्न वहाँ।
निज शक्ति तेज के साथ शस्त्र को लिए हाथ
तत्काल आ गये वैरी के सामने वहाँ ॥ २० ॥

उस महावीर कपि को सम्मुख ही देख-देख
मानते हुए तृण-तुल्य उसे था बोला वह।

अपेह्याशिवतो नैव वाञ्छामि युद्धं
त्वया दर्शितं हन्त ! कापेयमत्र ।। 21 ।।

अहं चक्रवालाधिपो भूमिपालो
दिशां चक्रवाले प्रसिद्धिं गतश्च ।
त्वया वानरेणास्तु मे चेन्नियुद्धं
परीहासपात्रत्वमेष्यामि सत्यम् ।। 22 ।।

नियुद्धं समेनैव तावत् समस्य
प्रशस्यं भवेन्नेतरेण प्रमादिन् ।
नृपस्यासुरस्यैकतश्चापरत्र
नियुद्धं कपेर्ब्रूहि किं शोभनं स्यात् ? ।। 23 ।।

दयाया वशात्त्वां विमुञ्चामि शाखा-
मृग त्वं पलायस्व रक्षापि च स्वम् ।
मदीयेन हस्तेन निष्पीडिताङ्गो
दशां भाग्यदिष्टां प्रयातासि नो चेत् ।। 24 ।।

समाकर्ण्य तस्यासुरस्योग्ररूपां
गिरं स प्रवीरोऽशनिध्वानवाचा ।
कपिः प्राह तं नैव जात्याऽस्ति कश्चिद्
बली वाऽबली वेति बाढं गृहाण ।। 25 ।।

कपित्वान्न मे वीर्यहानिर्भवेद्वा
ऽसुरत्वादथो तेऽस्तु भो ! वीर्यवृद्धिः ।
परीक्षा नियुद्धे भवेदावयोर्द्राक्
न कस्यापि वीर्यं परीक्ष्यं गिरैव ।। 26 ।।

'तुम हटो यहां से तुमसे युद्ध न करूँ क्योंकि
तुमने दिखलाया कपि स्वभाव भी अपना यह ॥ २१ ॥

मैं चक्रवाल का अधिनायक हूँ भूमिपाल
मैं हूँ विख्यात दशों दिशि में है यही सत्य।
तुम जैसे वानर से करके मैं द्वन्द्व-युद्ध
बन जाऊंगा परिहास-पात्र है यही सत्य ॥ २२ ॥

हो सकता है सामान के संग ही द्वन्द्व-युद्ध
है नहीं किसी असमान संग यह कभी उचित।
साधारण वानर संग युद्ध दानवपति का
क्या शोभा देगा सभी भाँति है यह अनुचित ॥

हे शाखामृग ! मैं मुक्त कर रहा करुणावश
इसलिए, भाग जाओ निज रक्षा करो स्वयम्।
अन्यता हाथ से मेरे निष्पीडित होकर
जाओगे अंगहीन हो दुर्गति मध्य स्वयम् ॥ २४ ॥

उस दानव की क्रोध भरी वाणी सुनकर
वह महावीर वज्रवत् वचन कह उठा वहीं।
कपि बोला—कोई नहीं हुआ जन्म से बली सहज
अथवा निर्बल होता है कोई कभी नहीं ॥ २५ ॥

कपि होने से मेरी बल़वत्ता घटी नहीं
राक्षस होने से तुम न सहज़ ही वीर्यवान्।
पहचान द्वन्द्व में हो जायेगी दोनों की
वाणी से ही बन सके न कोई वीर्यवान् ॥ २६ ॥

इमां वाचमाचम्य तां वानरस्य
निजस्यावशः संप्रजह्रे तमाशु ।
कपिश्चापि तं निष्पिपेष प्रहारै-
र्नियुद्धं प्रवृत्तं तदाऽपूर्वमासीत् ।। 27 ।।

उरःपेषमेतौ नियुद्धे प्रवृत्तौ
तलाभ्यां भुजाभ्यां कराभ्यां च वीरौ ।
मिथः सम्प्रहारैः क्षताङ्गौ प्रवर्ष-
ज्जले गैरिकाद्रेरभिख्यां दधाते ।। 28 ।।

स्वकार्यत्वरावांस्तदा वायुपुत्रः
समुत्थाप्य तं दानवं वायुवेगात् ।
समुद्भ्रामयामास खे चापि चक्रे
द्विधा तं मुधावीर्यमत्यन्तधैर्यः ।। 29 ।।

क्षणेनैव भूयः स युक्तोऽजनिष्ट
कपेस्तत् परं विस्मयं सन्ततान ।
वधोऽस्यासुरस्यास्तु युक्त्या कयेति
स चिन्तापरोऽभून्न लेभे च युक्तिम् ।। 30 ।।

(उपजातिवृत्तम्)

विभीषणः प्राह कपिं ततस्तं
यावन्न वक्षः प्रविदीर्यतेऽस्य ।
तावन्न रक्षोऽधम एष शक्यः
केनापि हन्तुं जगतीतलेऽत्र ।। 31 ।।

वानर की ऐसी बातें सुनकर महीपाल
आपे से बाहर होकर था आक्रमण किया।
कपि ने भी उस पर किया प्रहार, धकेल दिया
उस समय अपूर्व द्वन्द्व भी था प्रारंभ हुआ ॥ २७ ॥

घूंसों से चाती पर प्रहार प्रारंभ हुए
हाथ से, भुजाओं से दोनों में द्वन्द्व हुआ।
जो हुए प्रहार परस्पर उससे क्षत-विक्षत
मेरू गिरि सदृश रक्त की वर्षा हुई वहां ॥ २८ ॥

उस समय वायुसुत ने तत्परता दिखलाई
वायु के वेग से उस दानव को उठा लिया।
आकाश मध्य था उसे घुमाया कपि ने तब
कर शक्तिहीन उसको सहसा दो खण्ड किया ॥ २९ ॥

क्षणभर में ही वे दोनों खण्ड जुड़े ऐसे
यह देख दृश्य कपि को अतिशय आश्चर्य हुआ।
है कौन युक्ति जिससे इसका हो सकता वध
सूझा न उपाय तभी कपि भी था चिन्तामग्न हुआ ॥ ३० ॥

उस समय विभीषण ने कपि से यह बात कही
इसका विदीर्ण होता है वक्ष नहीं जब तक।
पृथ्वी पर कोई मार नहीं सकता सहसा
इस अधम राक्षस महीपाल को तब तक ॥ ३१ ॥

चिन्तां विहायात्र विदारय त्वं
वक्षो विचित्रस्य कुराक्षसस्य ।
श्रुत्वाऽदसीयं वचनं हनूमान्
'उरोविदारं प्रतिचस्करे तम्' ।। 32 ।।

विदीर्णमात्रे तदुरस्यपासुः
पपात भूमौ दशकण्ठमित्रम् ।
साध्ये च सिद्धिं समवाप्य वीरः
स्वधाम धीरो हनुमाञ्जगाम ।। 33 ।।

(अनुष्टुब्वृत्तम् )

एवं समुद्धृतः पूर्वं रामवाक्याद् विभीषणः ।
सङ्कटाद् भीषणात्सद्य उत्थिताच्च हनूमता ।। 34 ।।

इसलिए त्याग कर चिन्ता इस दानवपति के
वक्ष का विदारण करो जो कि विचित्र यहाँ।
सुन करके वचन विभीषण के हनुमत् ने भी
दानव का वक्ष-विदारण ही कर दिया वहाँ ॥ ३२ ॥

वक्ष का विदारण होते ही मृत दानवपति
दशकण्ठसखा धरती पर था गिर पड़ा वहाँ।
जो कार्य सिद्ध करना था उसको पूरा कर
बलवान् धीर हनुमान् धाम निज चला गया ॥ ३३ ॥

उद्धार विभीषण का ऐसे
राम के कथन से हुआ वहाँ।
हनुमत् के द्वारा ही भीषण
संकट से वह बच गया वहाँ ॥ ३४ ॥

# एकोनविंशः सर्गः

## (लङ्कोपद्रवोपाख्यानम् )

(इन्द्रवज्रावृत्तम् उपजातिवृत्तञ्च)

दशानने मृत्युवशं प्रयाते
विभीषणे शासति चापि लङ्काम् ।
दशास्यपूर्वाग्रमहिष्यनन्या
मन्दोदरी नाम तदा बभूव ।।1।।

स्वभ्रातृपत्नीमधुना नृपालो
विभीषणस्तामकरोत् स्वपत्नीम् ।
तेजो दशास्याहितमादधाना
कालेन साऽसोष्ट तनूजमेकम् ।।2।।

क्रमेण वैणासुरवंशनामा
पुत्रोऽसकौ यौवनमाससाद ।
तस्याभवत्सेवक एक एनं
यः पर्यचारीद् वरणीसुराख्यः ।।3।।

असाविमं नित्यमबोधयिष्ट
यद्यत्पिताऽस्याऽन्वभवद्दशास्यः ।
यद्वा कृतं तत्र विभीषणेन
पक्षं रिपूणां समुपाश्रितेन ।।4।।

# एकोनविश सर्ग

## (लंकोपद्रवोपाख्यान)

रावण के मरने के पश्चात् विभीषण ने
लंका का शासन-भार संभाल लिया था जब।
दशमुख की पटरानी महिषी लावण्यमयी
मन्दोदरी जिसका नाम, हुई विख्याता तब ॥ १ ॥

अपने भाई की पत्नी को उस नरपति ने
अपनी ही पत्नी उसे सहज ही बना लिया।
गर्भ में किया था धारण दशकण्ठ-तेज
समयानुसार उसने सुत एक उत्पन्न किया ॥ २ ॥

उस बालक का वैणासुर वंश प्रसिद्ध नाम
धीरे-धीरे वह यौवन पद को प्राप्त हुआ।
वरणीसुर नामक उसका सेवक रहा एक
करता था उसकी परिचर्या दिनरात वहाँ ॥ ३ ॥

वरणीसुर उसको नित्य यही बतलाता था
जो उसके पिता दशानन ने थी अनुभत किया।
जो हुआ विभीषण ही कारण था, रिपुदल में
जाकर उसने सहसा जब शरण गही ॥ ४ ॥

अमुष्य तच्छूलमिवातुदत्तन्
न्यक्षेण वृत्तं विदितं पुराणम् ।
अन्याय्यमासीज्जनके कृतं यत्
तस्याभवत्तत्प्रतिशोधने धीः ।।5।।

जातोऽपि वंशे बत रक्षसां मे
पितृव्यपाशो रिपुपक्षपाती ।
अघातयत्तं प्रबलप्रतापं
स्वानां विरोधः किमु नैव कुर्यात् ।।6।।

यद्यस्मि पुत्रो दशकन्धरस्या-
न्यायो मयासौ परिमार्जनीयः ।
स एव पुत्रो महितः पृथिव्यां
यश्शास्ति ताताहितकारिलोकम् ।।7।।

इत्थं विचिन्त्य प्रययौ कुमारः
स्वतातमित्रं मलिवन्नरेशम् ।
श्रीचक्रवर्तीत्यभिधानभाजं
तं प्राह चित्ते यदभून्निजे च ।।8।।

तं रावणस्यात्मजमेष राजा
मित्रस्य पुत्रं निजपुत्रमेव ।
अमन्यत प्रत्यवदच्च पुत्र !
यथाऽभिलाषस्तव तत्करोमि ।।9।।

आसीद्दशास्यो मम बन्धुरूपो
दिशां विजेता प्रबलप्रतापः ।

शूल के सदृश दुःखदायी वह वृत्तान्त, पूर्व
जो घटित हुआ, जानकर उसे अति क्षोभ हुआ।
यह किया गया अन्याय पिता के साथ, अतः
प्रतिशोध करूंगा, उसने मन में ठान लिया ॥ ५ ॥

यद्यपि मेरे चाचा का जन्म दनुज कुल में
था हुआ, किन्तु शत्रु का उन्होंने पक्ष लिया।
करवाया वध उन प्रबल प्रतापी रावण का
कुल का विरोध इस भाँति किसी ने नहीं किया ॥ ६ ॥

यदि मैं दशकन्धर का सुपुत्र हूं तो मुझको
अन्याय हुआ जो उसे मिटाना है निश्चित।
है वही पुत्र इस पृथ्वी पर तो महामहिम
दण्डित करता, कर गया पिता का जो कि अहित ॥ ७ ॥

करके विचार इस भाँति कुमार गया तत्क्षण
मलिवन्नरेश ढिंग जो पिता का मित्र रहा।
नाम भी चक्रवर्ती जिसका, उससे उसने
जो उसके मन में था सब कुछ स्पष्ट कहा ॥ ८ ॥

मल्विन्नरेश ने रावण के पुत्र को स्वयं
समझा अपने पुत्र के सदृश उस समय वहीं।
उससे राजा ने कहा—'पुत्र ! निःसंशय ही
जो चाह रहे हो, वही करूँगा निश्चित ही ॥ ९ ॥

वह दशकन्धर तो था मेरा ही बन्धुरूप
जो दिग्दिगन्त में विजयी प्रबल प्रतापयुक्त।

रामेण तावद्वनचारिणाऽभूद्
धतो न रामस्य विशिष्टताऽत्र ।। 10 ।।

स्वज्ञातिरेवात्र विभीषणः स्व-
ज्ञातेर्विरोधी समभून्निमित्तम् ।
छिद्राणि येनापरपक्षपातात्
स्वानां परेभ्यः प्रकटीकृतानि ।। 11 ।।

यद्यस्ति दण्ड्यः क्वचनाऽत्र लोके
स एव दण्ड्यः स्वजनापकारी ।
तदेहि लङ्कामभिषेणयाव
मृत्योः पदं चाशिवममापयाव ।। 12 ।।

स एवमुक्त्वा मलिवन्नरेशो
सहैव वैणासुरवंशनाम्ना ।
दशास्यपुत्रेण वृतश्चमूभिः
लङ्कापुरीं सम्प्रति सम्प्रतस्थे ।। 13 ।।

आसीत्तदा बेञ्जकयीति नाम्न्यां
हनूमतो राक्षसकन्यकायाम् ।
पुत्रोऽतिवीरोऽसुरफत्समाख्यो
विभीषणं यः समया न्यवात्सीत् ।। 14 ।।

लङ्कानिरोधे मलिवन्नृपेण
ततोऽपयातः स यथा कथञ्चित् ।
विचिन्तितः सूचयितुं महात्मा
दुर्वृत्तमेतज्जनकं स्वमैच्छत् ।। 15 ।।

उस वनवासी राम के हाथ से वधा गया
इसमें न राम की कहीं विशेषता दिखी क्वचित् ॥ १० ॥

यद्यपि स्वजाति का रहा विभीषण, फिर भी तो
जाति-विरोध किया कारण बन गया यहाँ।
वह मिला शत्रु से पक्षपात के कारण ही
लंका का सारा भेद उसी ने बता दिया ॥ ११ ॥

यदि यहाँ लोक में है कोई दण्ड के योग्य
तो निज जन का अपकारी वह दण्ड का पात्र।
इसलिए चलो लंका तुरन्त उस द्रोही को
यमपुर पहुँचा दें, अपना है यह कार्यमात्र ॥ १२ ॥

ऐसा कहकर मलिवन्नरेश ने उसी समय
वैणासुरवंश नाम दानव के साथ-साथ।
प्रस्थान किया लंका नगरी की ओर तुरत
सेनाएं लेकर रावण-सुत के साथ-साथ ॥ १३ ॥

उस समय वहाँ था विद्यमान हनुमन्त तनय
जो वेञ्ञकयी नामक राक्षस कन्या से था।
वह पुत्र असुरफत् नामक वीर विभीषण के
साथ वहीं लंका में निशिदिन रहता था ॥ १४ ॥

मल्विन्नरेश ने जब लंका को घेर लिया
उस समय वीर वह किसी भाँति था भाग गया।
चिन्तित हो उठा, पिता को सूचित करने को
इस घटना को बतलाने का सुविचार किया ॥ १५ ॥

दुर्दान्तशत्रोः प्रतिरोधनेऽस्य
सहायताऽपेक्ष्यत इत्यधीरः ।
तस्य प्रवृत्तौ दनुजप्रवीरः
प्रयत्नमातिष्ठत सद्य एव ।। 16 ।।

कुत्रापि शैले जनकस्तदीय-
स्तपस्यतीत्येष विवेद विद्वान् ।
शैलात्स शैलं समभूत्प्रवृत्तो
गन्तुं समन्वेषणकाम्यया तम् ।। 17 ।।

एकत्र शैले स ददर्श कञ्चि-
ज्जनं प्रवीरस्तप आचरन्तम् ।
नायं कपिर्नैष भवेद्धनूमा-
नित्यस्य शङ्का मनसि प्रजाता ।। 18 ।।

वने भ्रमन्नेकदिने हनूमान्
रसालवृक्षे सरसै रसालैः ।
कस्मिंश्चिदाकृष्यत तानि भोक्तुं
प्रवृत्तिमांश्चैव बभूव सद्यः ।। 19 ।।

पृथक्कृतानां निजवृन्तजाता-
त्क्षीरेण सम्प्रस्रवता मुखेभ्यः ।
संलिप्तसर्वावयवो बभूव
कपिस्तुषारस्नुतिधौतवर्णः ।। 20 ।।

द्वाभ्यां कराभ्यां स इदं प्रमार्ष्टुं
कपिस्वभावात्समभूत्प्रवृत्तः ।

दुर्दान्त शत्रु का प्रतिरोधन दिख रहा कठिन
इसलिए, सहायता की अपेक्षा अधिक यहाँ।
सोचकर यही वह दनुज वीर दिखता अधीर
तत्काल प्रयत्नों में प्रवृत्त हो उठा वहाँ ॥ १६ ॥

सहसा उसने देखा था एक शैल-ऊपर
था मग्न तपस्या में कोई सज्जन प्रवीर।
पर, यह तो कपि है नहीं, नहीं हैं हनूमान
ऐसी शंका में पड़ा वहाँ वह दनुज वीर ॥ १७ ॥

वन-मध्य किसी दिन घूम रहे थे हनूमान
थे जहाँ आम के वृक्ष सरस फल दिखे वहाँ।
उनको खाने के लिए हुए वे आकर्षित
उनके मन में ऐसी इच्छा जग गई वहाँ ॥ १८ ॥

वन-मध्य किसी दिन घूम रहे थे हनूमान
थे जहाँ आम के वृक्ष सरस फल दिखे वहाँ।
उनको खाने के लिए हुए वे आकर्षित
उनके मन में ऐसी इच्छा जग गयी वहाँ ॥ १९ ॥

जैसे ही तोड़ा आम, आम की डाली से
उनके मुख से उसका रस बहने लगा सहज।
उनके सारे अंगों में रस था सना हुआ
देह पर तुषार पहले से, कपि था धौत वर्ण ॥ २० ॥

पोछने लगे दोनों हाथों से हनूमान्
कपि के स्वभाव से वे उसमें संलग्न हुए।

एवं च कुर्वन् परिहासपात्रं
भार्याजनस्याभवदुन्मुखस्य ।।21।।

स व्रीडितस्तेन बभूव भूयः
कृतावमानो वनिताजनेन ।
सम्मार्ष्टुमेतामवमाननां च
तप्तुं तपो बुद्धिमधात्स्वकीयाम् ।।22।।

दिष्फैल्समाख्यं समुपेतवांश्च
ऋषिं तदर्थं स कपिप्रवीरः ।
कपिः कथं तप्तुमलं तपः स्या-
दित्यास्त चिन्ता महती ऋषेस्तु ।।23।।

विचिन्तयन्नेष ऋषिस्तदानीं
कपेर्मनुष्यीकरणादृतेऽन्यम् ।
नैवाभ्युपायं कमपि प्रजानन्
मनुष्यरूपं प्रददावमुष्मै ।।24।।

मनुष्यरूपेण स शैलशृङ्गे
समाधिमास्थाय तपश्चचार ।
तदैव पुत्रोऽसुरफत्समाख्यो
ऽन्विष्यन्प्रयत्नेन तमभ्युपेतः ।।25।।

पप्रच्छ चैनं ननु भद्र ! दृष्ट-
स्त्वया चरन् क्वापि तपो हनूमान् ? ।
सौम्याहमेवास्मि स इत्युवाच
किमर्थमन्विष्यसि तं त्वमत्र ? ।।26।।

ऐसा करने से बने सहज परिहास पात्र
अपनी भार्या द्वारा, मुख जिनके उठे हुए ॥ २१ ॥

यह देख हनूमत् हुए परम लज्जित ऐसे
उन वनिता जनके द्वारा थे अपमानित वे ।
फिर अवमानना मिटाने के ही हेतु सहज
तप करने का कर बैठे निश्चय हनुमत् वे ॥ २२ ॥

दिष्फैल नाम के ऋषि से मिलने के हितार्थ
वे हनूमान् जा पहुँचे उनके पास वहाँ ।
यह वानर है, कैसे होगा तपयोग्य भला
ऐसी चिन्ता ऋषि के मन में व्यापती वहाँ ॥ २३ ॥

इस भाँति सोचते हुए तभी ऋषि ने उनको
कपि से सहसा कर दिया सहज ही नरस्वरूप ।
इसके अतिरिक्त न कोई अन्य उपाय दिया
इसलिए दिया हनुमत् को सब विधि पुरुष रूप ॥ २४ ॥

उस शैल श्रृंग पर पाकर वैसा मनुजरूप
करके समाधि कपि ने तप भी प्रारंभ किया ।
फिर, उसी समय वह पुत्र असुरफत् नामक भी
खोजता हुआ यत्न से पहुँच ही गया वहाँ ॥ २५ ॥

पूछा उससे—'हे भद्र ! बताओ तुम्हें कहीं
तप करते वे हनुमान् दिखाई पड़े यहाँ ?
'मैं ही हूँ हनुमान्' इस तरह बोले वे
किस कार्य हेतु तुम ढूँढ रहे हो उन्हें यहाँ ॥ २६ ॥

श्रुत्वा वचस्तस्य रुषा परीत-
स्तमुग्रवाचाऽसुरफद् बभाषे ।
एवं मृषा त्वं वचनं ब्रुवाणो
न लज्जसे किं न च वा बिभेषि ? ।।27।।

पिता हनूमान् मम वानरोऽस्ति
त्वं तापसम्मन्य ! तु मानुषोऽसि ।
अहं हनूमानिति यद् ब्रवीषि
तन्मानुषत्वेन कथं घटेत ? ।।28।।

किञ्चापि रे तापसचेल ! वेत्सि
लोकोत्तरां मे जनकस्य शक्तिम् ? ।
नक्षत्रताराशशिनो निगीर्णा
मत्वा पुरा येन फलानि तावत् ।।29।।

श्रुत्वा स्तुतिं स्वस्य सुतात्प्रतीतः
पुनर्हनूमानिममाह वाचम् ।
नक्षत्रताराशशिनो मयैव
पूर्वं निगीर्णा इति सत्यमेतत् ।।30।।

तप्तुं तपो मानुषरूपधारी
जातोऽहमद्येति गृहाण पुत्र ।
नो प्रत्ययश्चेद्वचने मदीये
तत्तिष्ठ ते प्रत्ययमादधामि ।।31।।

उक्त्वा स एतन्निजमूलरूपं
प्रपेदिवांश्चापि निगीर्णवांश्च ।

सुनकर उनके ये वचन क्रोध से भरी हुई
अत्यन्त उग्र वाणी असुरफत् कहा वहीं ।
'इस भाँति बोलते हुए मृषा वाणी तुम को
लज्जा क्यों आई नहीं या कि भय लगा नहीं ॥ २७ ॥

हनुमान् पिता मेरे वानर हैं सर्वविदित
हे पूज्य तपस्विन् ! तुम हो मानुष रूप सहज ।
मैं हूँ हनुमान्, इस तरह जो तुम कहते हो
वह कैसे इस मानव स्वरूप में घटे सहज ॥ २८ ॥

अथवा रे तापस ! क्या तुम हो जानते इसे
है अद्वितीय वह शक्ति पिता की कही गई ।
नक्षत्र सहित तारा शशि को वे निगल गये
जानकर उन्हें फल के स्वरूप में सहज कभी ॥ २९ ॥

अपने सुपुत्र से सुनकर निज यथोवृत्त
'मैं हनूमान् हूँ फिर भी बोले वचन यही ।
नक्षत्र सहित शशितारा मैं ही निगल गया
अपने बचपन में किसी समय है सत्य यही ॥ ३० ॥

तप के हितार्थ ही हुआ यहाँ मैं मनुज रूप
इस समय यही है सत्य, मान लो इसे पुत्र ।
यदि मेरी बातों पर तुमको विश्वास नहीं
तो रुको, यहीं विश्वास दिलाऊँ तुम्हें पुत्र' ॥ ३१ ॥

यह कहकर धारण किया सहज निज मूल रूप
था किया प्रयास निकलने का उस समय वहाँ ।

नक्षत्रताराशशिनः समेतान्
पुत्रेण साश्चर्यमवेक्ष्यमाणः ।। 32 ।।

पुत्रस्तदीयः प्रणिपातपूर्वं
जग्राह पादौ जनकस्य भीतः
क्षमापयामास ततश्च स स्व- ।
मागस्कृतं सम्प्रति मन्यमानः ।। 33 ।।

उत्थाप्यं दोर्भ्यां हनुमांस्तनूजं
गाढं परिष्वज्य च साश्रुनेत्रः ।
पुत्रस्य लाभात्परमप्रतीतो
ऽकस्मादमुं वाचमिमामुवाच ।। 34 ।।

दृष्टो मयाऽऽसीर्न पुरा सुत ! त्वं
नाहं त्वया चाप्यभवं प्रदृष्टः ।
अदृष्टयोर्नौ कथमेव तावद्
भवेदभिज्ञा सुततातयोर्नु ? ।। 35 ।।

अतर्कितं रत्नमिवास्ति पुत्र-
रत्नं मया लब्धमिहाद्रिशृङ्गे ।
सद्यःफलं मे तप इत्यनेन
हर्षप्रकर्षो हृदि मे न माति ।। 36 ।।

वचोऽतिहृष्टोऽसुरफद् बभाषे
श्रुत्वा वचस्तज्जनकस्य हन्त ! ।
तृप्तं चिरायाद्य मदीयनेत्र-
युगं समालोकयतस्स्वताताम् ।। 37 ।।

नक्षत्र सहित शशि तारागण को निगल गये
यह देख आश्चर्य चकित हो उठा पुत्र वहाँ ॥ ३२ ॥

हनुमत्-सुत को विश्वास हो गया, चरणों पर
तात के गिर पड़ा, वह अतिशय भयभीत हुआ।
तदनन्तर उनके संमुख क्षमा-याचना की
अपराध उस समय अपना भी स्वीकार किया ॥ ३३ ॥

बाहु से उठाकर सुत को हनुमत् ने
गद्गद् होकर कण्ठ से लगाया बार-बार।
पुत्र की प्राप्ति से अतिशय हर्षित हुए पुनः
सहसा, वे बोले उससे वाणी इस प्रकार ॥ ३४ ॥

तुम नहीं दिखायी पड़े आज तक पुत्र ! कभी
पैदा होने पर भी मैं तुमको दिखा नहीं।
इसलिए, बिना देखे सुत ! एक दूसरे को
हो सकती है पहचान तात-सुत की कि नहीं ॥ ३५ ॥

इसमें सन्देह नहीं तुम तो हो पुत्ररत्न
वह रत्न मिल गया मुझे शैल पर सहज यहीं।
तत्काल प्राप्त कर लिया तपस्या-फल मैंने
आनन्द हृदय में समा रहा है यहाँ नहीं ॥ ३६ ॥

सुनकर वाणी वह असुरफत् भी बोला यों
उस समय तात की बातों से था आनन्दित।
'हो गया तृप्त देखकर आपको आज यहाँ
युग-युग से दर्शन की लालसा आपके हित ॥ ३७ ॥

"अद्य क्रियाः कामदुघाः क्रतूनां
सत्याशिषः सम्प्रति भूमिदेवाः" ।
चिराय यद्दर्शनमीप्सितं मे
स एव साक्षात् पुरतो ममास्ति ।।38।।

ममेष्टदेवोऽसि पिता मम त्वं
'मनोरथानामतटप्रपातः' ।
त्वद्दर्शनेनैव कृती तथापि
गुर्वत्र कार्यं प्रतिपादयामि ।।39।।

उक्त्वैतदेनं स उवाच वृत्तं
लङ्कापुरीपूर्वगतं समस्तम् ।
श्रुत्वाऽभवद्यत्सुतरामशान्त-
स्तान्तान्तरङ्गश्च कपिप्रवीरः ।।40।।

तपो विहायाथ सुतेन सांकं
खिद्किन्[1] पुरीमाशु स सम्प्रतस्थे
सैन्यं च सङ्गृह्य ततः स तेन
पुरीमयोध्यां सह सम्प्रतस्थे ।।41।।

ततः समेतो भरतेन चापि
शत्रुघ्ननाम्ना च रघूद्वहेन ।
लङ्कापुरीमोचनबद्धबुद्धि-
रकालहीनं प्रति तां प्रतस्थे ।।42।।

दीर्घीकृतो नीलकलेवरोऽत्र
चकार वारांनिधिसेतुकार्यम् ।

1. थाईरामायणे किष्किन्धापुर्यंतन्नाम्ना ऽभिहिता ।

यज्ञ-क्रियाएं बनी आज ज्यों कामधेनु
इस समय भूमिदेवों के आशिष हुए सत्य।
थी बहुत समय से जिसके दर्शन की इच्छा
वह आज दिख रहा साक्षात् मेरे समक्ष ॥ ३८ ॥

तुम मेरे पिता तथा हो मेरे इष्टदेव
हो गया मनोरथ भी मेरा संपूर्ण यहाँ।
यद्यपि दर्शन से ही कृतार्थ हो रहा किन्तु
जो महत्कार्य है, कहता हूँ आपसे यहाँ ॥ ३९ ॥

ऐसा कहकर उसने वह घटना बतलायी
लंका नगरी में हुआ उसे ही समझाया।
जिसको सुनकर हनुमन्त हो उठे थे अशान्त
उन कपि प्रवीर का हृदय सहज ही भर आया ॥ ४० ॥

इसलिए, तुरन्त त्याग कर तप पुत्र के साथ
हनुमात् ने तुरत किष्किन्धा प्रस्थान किया।
करके सेना एकत्रित, फिर, पुत्र के साथ
उन्होंने तत्क्षण अयोध्या नगरी को प्रस्थान किया ॥ ४१ ॥

तदनन्तर वहाँ भरत को लेकर साथ तथा
रघुकुल प्रवीर शत्रुघ्न हो लिये साथ-साथ।
लंका नगरी की मुक्ति हेतु मन में निश्चय
करके सारे चल पड़े शीघ्र ही साथ-साथ ॥ ४२ ॥

निज नील कलेवर को विशाल करके कपि ने
सागर पर तत्क्षण सेतु कार्य संपन्न किया।

सैन्यानि येन प्रययुः सुखेन
पारेसमुद्रं प्रयतानि तानि ।। 43 ।।

पूर्वं निविष्टानि बभूवुरेता-
न्यद्रौ विशाले समयैव लङ्काम् ।
सन्ध्यादिवार्ताऽक्रियतेत एव
सैन्याधिपैर्वानरवीरमुख्यैः ।। 44 ।।

वार्तादिके निष्फलतां प्रयाते
युद्धं समारभ्यत नाशकारि ।
सैन्यानि यत्रोभयपक्षगानि
प्रदर्शयामासुरपारशौर्यम् ।। 45 ।।

भयङ्करायोधनसङ्गतानि
स्वनायकादेशवशंवदानि ।
खड्गैः शिलाभिस्तरुभिश्च तानि
शरैश्च हस्तैश्च मिथः प्रजह्रुः ।। 46 ।।

हतोऽत्र वैणासुरवंशनामा
मुक्तोऽत्र युद्धे च विभीषणोऽभूत् ।
सेना विजेत्री च ततः प्रतस्थे
प्रति प्रदेशं मलिवन्नृपस्य ।। 47 ।।

तत्रापि युद्धं ववृतेऽतिघोरं
जयं न लेभे मलिवन्नृपश्च ।
दशाननस्येव दशा बभूव
तस्यापि तन्मित्रवरस्य तावत् ।। 48 ।।

जिस पर सुनियंत्रित सेना ने सुख से सहसा
चल कर उस सागर को क्षण भर में पार किया ॥ ४३ ॥

सबसे पहले सेना ने किया निवास तुरत
उस पर्वत पर जो लंका के ही निकट रहा।
फिर, सेनां के नर वीर प्रमुख सेनापति के
द्वारा समझौते की वार्ता का दौर चला ॥ ४४ ॥

जब सन्धि वार्ता आपस में हो गयी विफल
तदनन्तर वह विनाशकारी संग्राम हुआ।
तब उभयपक्ष की सेनाओं के वीर सभी
निस्सीम शौर्य का परिचय देते रहे वहाँ ॥ ४५ ॥

वे लिये भयंकर अस्त्र-शस्त्र नाना प्रकार
अपने नायक की आज्ञा का पालन करते।
वे खड्ग, शिला, तरु-वाण तथा निज हाथों से
उस समय परस्पर भिड़े हुए दिखते लड़ते ॥ ४६ ॥

वैणासुरवंश युद्ध में मारा गया वहाँ
इसलिए, विभीषण भी स्वतन्त्र हो गया वहाँ।
तदनन्तर मलिवन्नृप की पीछे उसी समय
विजयी सेना लग गयी, वह गया जहाँ ॥ ४७ ॥

था हुआ वहाँ भी घोर युद्ध सेनाओं में
मलिवन्नरेश, फिर भी, विजयी हो सका नहीं।
जो दशा दशानन की पहले थी हुई कभी
उसके उस परम मित्र की गति भी हुई वही ॥ ४८ ॥

एकैकशस्तस्य सुतास्त्रयोऽपि
वीराः प्रयाताः सदनं यमस्य ।
वेतालनामापि च तत्सहायो
नीलेन युद्धे निहतो बभूव ।। 49 ।।

अन्ते च वीरो भरतो जघान
स्वकष्टजातान्तमिव प्रसन्नः ।
प्रचण्डयोधं मलिवन्नरेशं
ब्रह्मास्त्रयोगेन विदां वरेण्यः ।। 50 ।।

(वसन्ततिलकावृत्तम्)

स्थानेऽभ्यषिञ्चदथ तस्य हनूमतोऽयं
मच्छानुसञ्ज्ञकमपत्यवरं प्रतापी ।
रामानुजो भरत, आह च तं प्रवीरं
धर्मेण शाधि नयविन्मलिवत्प्रदेशम् ।। 51 ।।

पुत्री प्रिया च नृपतेरथ चक्रवर्ती-
त्याख्यस्य रत्नमिव सम्प्रति रत्नमाली ।
पत्नी तवाग्रमहिषी भवतु प्रबुद्धा
सिंहासनं सह तया परिभूषयस्व ।। 52 ।।

उसके तीनों ही पुत्र एक के बाद एक
रण में मरकर वे यमपुर सहज सिधार गये।
वेताल नाम का उसका एक सहायक भी
नील के हाथ वह भी तो वध दिये गये ॥ ४९ ॥

अन्त में मुदित उन भरत वीर ने उस रण में
वध दिया उसे जिससे कष्टों का अन्त हुआ।
ब्रह्मास्त्रयोग के द्वारा मलिवन्नृप का भी
उस भीषण रण में भरत वीर ने अन्त किया ॥ ५० ॥

फिर, भरतवीर रामानुज ने हनुमन्त पुत्र—
मच्छानुवीर को राजा वहाँ बनाया था।
साथ ही उसे नीति का सहज उपदेश दिया
मलिवत्प्रदेश के शासनार्थ समझाया था ॥ ५१ ॥

'उस चक्वर्ति नृप की पुत्री अति प्रिया रही
जो रत्न तुल्य थी उसका नाम रत्नमाली।
वह हुई तुम्हारी पत्नी, तथा राजमहिषी
बैठो सिंहासन पर, संग में वह रत्नमाली ॥ ५२ ॥

# विंशः सर्गः

## (सीतानिर्वासनोपाख्यानम् )

(शिखरिणीवृत्तम् )

मृधे रक्षोराजे दशमुख उपेते यमपुरी-
मयोध्यां श्रीरामो जनमहित आसीत्प्रतिगतः ।
अभूत्तत्रामुष्याभिमततरकः सर्वजगतो-
ऽभिषेको राज्ये यो जनमनसि मोदं समतनोत् ।।1।।

वसन् प्रासादे स्वे समहृदयभ्रातृत्रययुतः
समं जानक्याऽथो मृदुहृदययाऽऽनन्दमतुलम् ।
अयं विन्दन् भिन्दन् जनमनसि मोहान्धतमसं
सुखं कालं नैजं व्यपगमयति स्म प्रमुदितः ।।2।।

अभूत्तस्मिन् काले जनकतनयाऽपि प्रमुदिता
पुरा कष्टौघं याऽसहत वचनानामविषयम् ।
विचित्रैषा लोके स्थितिरिह यया नन्दति जनः
क्षणान् कांश्चित्कांश्चिद् गहनतमकष्टं व्रजति च ।।3।।

वनेषु भ्रान्त्वाऽपि प्रथममतिकष्टेषु गहने-
ष्वयोध्यायां सम्प्रत्यतिमहितपुर्यामधिगता ।
पदं सीता राज्ञ्या इह जगति वीताखिलभया
विनिन्ये सुप्रीता निजसमयमत्यन्तसुखिता ।।4।।

# विंश सर्ग

## (सीता निर्वासनोपाख्यान)

रण में दानवपति रावण के मर जाने पर
श्रीराम अयोध्या में जन-जन से सम्मानित ।
था हुआ यहाँ पर उनका राजतिलक एवं
थी प्रजा इस समय देख उन्हें अति आनंदित ॥ १ ॥

वे राजभवन में सीता तथा भाइयों के
साथ ही रह रहे थे दिखते सब आनंदित ।
लोगों के मन का मोह हट गया, राम स्वयं
सुख से ही लगे बिताने समय परम प्रमुदित ॥ २ ॥

इस समय जनकतनया भी परमहर्षिता थीं
जो पहले ही सह चुकीं कष्ट भी अवर्णनीय ।
लोक में दशा यह है विचित्र, क्षण सुख मिलता
तो कभी दूसरे क्षण ही कष्ट जो असहनीय ॥ ३ ॥

वन-वन में रहीं भटकती, कष्टों को सहतीं
इस समय अयोध्या में वे रानी कहलायीं ।
उनके सारे कष्टों का अन्त हुआ अब तो
जीवन में उनके अति सुख की बेला आयी ॥ ४ ॥

अयं मोदस्त्वस्या नहि चिरमवातिष्ठत गति-
विर्धेरेषा चित्रा ऽखिल जगति नैषास्त्यविदिता ।
जनानामेतस्याः प्रबलतरवेगेन भवति
सुखं वा दुःखं वा भवति किमिवान्यज्जगति वा ।।5।।

ममान्तः कष्टानामुपगत इदानीमथ शुचां
मया तीर्णो भीमो जलनिधिरिदानीं च भयदः ।
अहो ! मे सौभाग्यं रघुकुलमणिर्मे पतिरिह
मदीये गर्भेऽथो विलसति तदीयाङ्कुर इति ।।6।।

प्रमोदाब्धौ यावत्तरति सरलैषा नृपवधूः
स्वकीये सौभाग्येऽनुभवति च गर्वौघमतुलम् ।
तदैवास्यां वात्याभ्रमिरिव भयोद्वेगजनिकृद्
अतीवोग्रो वज्रो हतविधिविलासान्निपतितः ।।7।।

अगच्छच्छ्रीरामः कतिपयदिनार्थं वनमतो
वियोगस्तेनाऽऽसीज्जनकतनयायायसहनः ।
वियोगस्योष्माणं प्रशमयितुमेषा कथमपि
तटिन्याः कस्याश्चित्तटमुपगता स्नातुमभवत् ।।8।।

अभूच्छूर्पेत्येवं प्रथमपदयुक्तं नखपदं
दधाना रक्षःस्त्री विकृतकृतरूपा शठतमा ।
सुमित्रापुत्रेण प्रकुपिततरा येन भवनं
जगामासौ भ्रातुर्दशवदनसंज्ञस्य रुदती ।।9।।

प्रतीकर्तुं तस्या अभवदवमानं दृढमति-
र्दशास्यः क्रूरास्योऽहरदथ च सीतां शठमतिः ।

उनका यह मोह न टिका बहुत दिन तक, विचित्र
विधि की गति भी संसार मध्य है सर्वविदित।
जिसके उस प्रवलवेग से लोगों के ऊपर
आता है सुख या दुःख अथवा अन्य भी क्वचित् ॥ ५ ॥

यह सोच रहीं—'मेरे दुःख का अब हुआ अन्त
मैंने भयकारी महासिन्धु को किया पार।
पति मेरे रघुकुलमणि, यह मेरा परम भाग्य
गर्भ में इस समय उनका अंकुर है अपार ॥ ६ ॥

जब तक प्रमोद सागर में तैर रहीं रानी
अनुभव करती गर्व का, रहा सौभाग्य परम।
तब तक उत्पात प्रभंजन भय-उद्वेग जनित
अति उग्र वज्र सम पड़ा दिखा दुर्भाग्य चरम ॥ ७ ॥

श्रीराम कुछ दिनों हेतु गये वन मध्य कहीं
उनका वियोग सीता न सहन कर सकीं सहज।
इसलिए, वियोग ऊष्मा के प्रशमन हितार्थ
स्नान हेतु वे गईं किसी सरिता तट पर ॥ ८ ॥

शूर्पणखा नामक रही राक्षसी किसी समय
लक्ष्मण के द्वारा विकृत रूप जो थी की गयी।
इसलिए, प्रकुपिता 'होकर भ्राता रावण के
पास ही रुदन करती शूर्पणखा तुरत गयी ॥ ९ ॥

अपमान हुआ जो उसका बदला लेना है
यह सोच दुष्ट रावण ने सीता-हरण किया।

ततो जाते युद्धे दशरथसुतेन प्रणिहतो
विनाशं प्रायासीद्विभवपरिपूर्णा ऽस्य च पुरी ।।10।।

अभूत्पुत्री तस्या असुरवनिताया अतुलिता
ऽतुलेत्याख्यां बिभ्रत्यतिविकटकार्येषु कुशला ।
परं क्रोधं स्वाम्बां प्रति कृतचरीं दुर्व्यवहृतिं
विचिन्त्यावापन्न क्षणमपि कथञ्चित्क्षणमसौ ।।11।।

प्रतीशोधस्तस्याः कथमिव मया साध्यत इति
मतिः प्रादुर्भूता मनसि कलुषेऽस्या हतधियः ।
स्वकार्ये सिद्धिः स्याद्यदि जनकपुत्रीरघुवरौ
मिथो भिद्येतामित्यवधृतमतिर्दुष्टयुवतिः ।।12।।

अपेक्षाञ्चक्रे सोचितमवसरं पापहृदया
समासीदच्चैनं दशरथसुतारण्यगमने ।
तथा सीतादेव्यास्तटिनितटसम्प्राप्तिसमये
विधाता दुष्टानामपि जगति साहाय्यकृतिभाक् ।।13।।

दधे मायारूपं जनकतनयाकिङ्करिसमं
तथारूपा तस्थे जनकतनयायाश्च सविधे ।
न चैतत्साऽज्ञासीत्सरलहृदया नैकदिवसान्
दिवारात्रं चासौ परिचरणमस्या व्यतनुत ।।14।।

अमुष्यां किङ्कर्यामपि जनकपुत्र्याः समभवत्
सखीस्नेहो नित्यं परिचरणकार्यात्समुदितः ।
मनस्यन्यद्येषां भवति खलु ते किङ्करगणा
भवन्त्येवावश्यं परिचरणकार्येऽतिनिपुणाः ।।15।।

तब रण में श्रीराम के हाथ वह वधा गया
ऐश्वर्यपूर्ण उसकी नगरी का नाश हुआ ॥ १० ॥

पुत्री थी उस सूर्पणखा की सुन्दरी एक
अतुला नामक वह सुता विकट कार्य कुशल ।
जो दुराचरण उसकी माता के साथ हुआ
उससे क्रुद्धा थी, क्षण भर भी मिल सकी न कल ॥ ११ ॥

'माँ का प्रतिशोध किस तरह सिद्ध करूँ अब मैं'
उस दुष्टा के मन में यह निश्चय व्याप्त हुआ ।
निज कार्य सिद्धि के हेतु जानकी-रघुवर में
भेद का भाव भर दूँ ऐसा कुविचार किया ॥ १२ ॥

वह समुचित अवसर की प्रतीक्षा में थी, जब
दशरथसुत श्रीराम गये वन में सहसा ।
मिल गया सुअवसर, सीता गयीं नदी तट पर
विधि बनता दुष्ट-सहायक जग में जब सहसा ॥ १३ ॥

वह सीता की सेविका तुल्य माया स्वरूप
वह उसी रूप में उनके साथ रही विधिवत् ।
सीता थीं सरल हृदय उसको न समझ पायीं
जो रात-दिवस उनकी सेवा करती विधिवत् ॥ १४ ॥

सीता का उस सेविका संग हो गया सहज
स्नेह भी सखी जैसा परिचर्या के कारण ।
वे सेवक जिनके मन में हो अन्यथा भाव
वे चतुराई से करते सेवा का व्रत धारण ॥ १५ ॥

दिने ह्येकस्मिन्सा ननु कृतककिङ्कर्यतिशठा
बभाषे देव्यासीर्दशवदनहर्म्ये त्वमुषिता ।
कथंरूपा तस्याऽऽकृतिरिति वद त्वं महदहो !
ममास्त्यत्रौत्सुक्यं प्रशमय ततस्त्वं विलिख तम् ।।16।।

(वियोगिनीवृत्तम्)

सखिभावमुपागतस्य मे
नियतं सेवनवृत्तिकस्य च ।
मम भृत्यजनस्य गीर्ध्रुवं
परिपाल्याऽस्ति मयेति भावतः ।।17।।

सरलप्रकृतिर्विदेहजा-
ऽसुरकन्याछलनामजानती ।
त्वरितं विलिलेख राक्षसा-
कृतिमेषोपलखण्डके स्फुटम् ।।18।।

अथ रावणरूपचित्रणाद्
विरता यावदभूद् विदेहजा ।
दनुजाऽतुलसंज्ञका तदा
कृतकार्या गतवत्यदर्शनम् ।।19।।

अथ तावदरण्यवासतो
न्यवृतत् तत्क्षण एव राघवः ।
तनुते विधिरेव तत्क्षणात्
न जनश्चिन्तयितुं हि यत्क्षमः ।।20।।

फिर एक दिवस सेवा में रत उस दुष्टा ने
पूछा—'देवी रावण के घर में रहतीं जब।
कैसी थी आकृति उसकी मुझे बताओ तो
उत्सुकता शान्त करो, रच चित्र उसी का अब ॥ १६ ॥

यह सखी भाव में पगी हुई
मेरी सेवा में लगी लगन।
सीता ने सोचा सेवक की
इच्छा का करना है पालन ॥ १७ ॥

वह सरल प्रकृति सीता उसकी
छल नीति न समझ सकी सहसा।
राक्षस का चित्र तुरन्त रचा
पाषाण खंड पर किञ्चित् स्फुट-सा ॥ १८ ॥

रावण का चित्र बनाकर जब
सीता जब उससे विरत हुई।
बन गया कार्य तब अतुला का
जो तत्क्षण वहीं अदृश्य हुई ॥ १९ ॥

तदनन्तर राघव भी वन से
तत्काल लौट आ गये वहाँ।
व्यापती विधाता-गति तत्क्षण
कोई न समझता जिसे यहाँ ॥ २० ॥

प्रपतेदथ मत्पतेरिहा-
सुरपाशाकृतिचित्रणेऽप्रिये ।
नहि दृष्टिरथो च नो भवे-
त्कथमप्यस्य मनो विशङ्कितम् ।।21।।

इति चिन्तयमानमानसा
तनुगात्री जनकात्मजा तदा ।
विनिमार्ष्टुमदः स्वचित्रितं
समियेषाहितभूरियत्नका ।।22।।

अथ यावदमुष्य मार्जनं
विदधे तावददः स्फुटं बभौ ।
अगमत्परमावशा ततो
महतीं व्याकुलतां विदेहजा ।।23।।

किमिदं, नहि मृज्यते मया
कथमेतादृशवक्त्रचित्रणम् ।
कथमेव च मृज्यमानता-
वशतोऽति स्फुटताऽस्य जायते ।।24।।

इति चित्रमिवाभवत्तदा
न रहस्यं बुबुधे च जानकी ।
नहि कश्चन दानवीं गतिं
प्रभवेद् वेदितुमित्यसंशयम् ।।25।।

अतुला गमनाद्विदेहजा-
नयनाभ्यां किल दूरतः परम् ।

राक्षस के अप्रिय चित्रण पर
ममपति की दृष्टि न पड़े कहीं।
देखकर उसे उनके मन में
कोई शंका उठ सके नहीं ॥ २१ ॥

इस भाँति सोचती मन ही मन
मृदुला सीता चिन्ता-निमग्न।
चित्र को मिटाने के हितार्थ
था किया तुरत अतिशय प्रयत्न ॥ २२ ॥

अब जितना उसे मिटाती वह
उतना ही और चमकता था।
तब हुई विवश महती सीता
उनकी बढ़ती थी व्याकुलता ॥ २३ ॥

यह क्या है, मिटता नहीं यद्यपि
मैं इसे मिटाती बार-बार।
यह चित्र मिटाने से स्फुट
होता जाता क्यों बार-बार ॥ २४ ॥

यह तो विचित्र-सी बात हुई
जानकी न रहस्य समझ पायीं।
इसमें दिखता सन्देह नहीं
पड़ती दानव गति दिखलायी ॥ २५ ॥

अतुला सीता की आँखों से
इस समय सहज ही दूर गयी।

प्रविवेश निजीयमायया
ऽसुरचित्रे तदभूच्च तद्वशे ।।26।।

नहि मार्ष्टुमिदं यदाऽशकद्
दनुजाकारविलेखनं तदा ।
अपहर्तुमिदं स्वभर्तृतः
शयनान्तर्निदधे विदेहजा ।।27।।

तदनन्तरमेव राघवः
शयनं विश्रमकाम्यया ययौ ।
समुपागतमात्र एव च
महदुष्णत्वमिहान्वभूदसौ ।।28।।

सुतरां समभूच्च विक्लवः
परिशान्तोऽपि जितेन्द्रियोऽपि च ।
स तु धैर्यधनोऽपि सन्नभूच्
च्युतधैर्यो रघुनन्दनस्तदा ।।29।।

नहि वेद स कारणं कथं
निजदेहे ज्वलिताऽनलावली ।
नहि पूर्वमियं कदाचना-
ऽप्यनुभूता भृशकष्टदा क्वचित् ।।30।।

समुवाच स लक्ष्मणं तदा
नचिरान्मार्गय कारणं प्रिय ।
मयि केयमनल्पतोष्णता
किमिवैषा दहतीव मामिह ।।31।।

